Digitized by Arya Samaj Foundation Chennai and eGangotri

वाणीं भजत

# गैर्वाणी

COMPILED




त्रैमासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा,

चित्तूर (आ० प्र०)

१ ] 30 DECEMBER 1962 वार्षिकम् १-५०






र्गशीर्षाङ्कः]  [मूल्यम् ४० पै०:

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषयसूची



---

सर्वे पत्रादिव्यवहाराः

**प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा,**

**चित्तूरु (आ० प्र०)**

इत्यनेनैव कार्याः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषयसूची



---

सर्वे पत्रादिव्यवहाराः

**प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा,**

**चित्तूरु (आ० प्र०)**

इत्यनेनैव कार्याः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




## त्रैमासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)

क्रमाङ्कः १ ] 30 DECEMBER 1962 वार्षिकम् १-५०



शुभकृन्मार्गशीर्षाङ्कः ]  [ मूल्यम् ४० पैसाः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषयसूची



---

सर्वे पत्रव्यवहाराः—

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)
इत्यनेनैव कार्याः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सम्पादकवर्गः

प्रधानसम्पादकः — श्री यं. वरदराजं पंतुलु,

प्रकाशकमन्त्री ।

## सहायाः

१. श्री ति. कं. तिरुवेङ्कटाचार्यः, प्रधानमन्त्री ।

२. श्री के. श्रीनिवासाचार्यः, परीक्षामन्त्री ।

३. श्री ने. सुब्बरायशास्त्री, प्रचारकमन्त्री ।

४. श्री के. मुनिरेड्डी, कार्यवाहिसभ्यः ।

५. श्री ए. सुब्रह्मण्यशास्त्री, कार्यदर्शी त्रिशिरःपुरीशाखायाः ।

६. श्री टि. महादेवशास्त्री, कार्यदर्शी नागपट्टिणशाखायाः ।

७. श्री जि. रामानुजाचार्यः, कार्यदर्शी मचिलीपट्टणशाखायाः ।

८. श्री ए. राजगोपालन्, कार्यदर्शी मदुरशाखायाः ।

९. श्री च. रंगाचार्यः, कार्यदर्शी हैदराबादशाखायाः ।

१०. श्री जि. यस्. श्यामाचार्यः, कार्यदर्शी कोयंबतूरशाखायाः ।

Published by Sri N. Ramanatha Iyer, B. A., B. L.,
Advocate & Secretary, S. B. P. Sabha, Chittoor (A.P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# महतां शुभसन्देशाः

## *Dr. S. Radhakrishnan,*

PRESIDENT, INDIA, NEW DELHI.

I am glad to know that the Samskrita Bhasha Pracharini Sabha, Chittoor, is bringing out a new journal called "Gairvani". I wish the publication success.



## Sri Swami Sivanada,

Sivanandanagar, (Himalayas) India.

My silent salutations and adorations to Goddess Saraswathi, the support, source, centre, ideal and goal of all cultures and Bhashas and all beings.

What is culture? That by knowing which, everything else is known, is the true culture. If that is known, all unseen things will be seen, all unheard of things will be heard, all understandable things will be understood. It is the culture of the Spirit or Soul or Atma. That is to be sought for and attained. There is no greater gain than this.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



Our ancient Seers and Sages of Bharatha Varsha have expounded this highest culture. Their experiences are recorded in the Upanishads. The Upanishads are the beconlights. They are the authority, as they are the result of Aparokshanubhooti. Everyone can get solace from them. All the problems can be solved by attaining this knowledge. The highest good, Sreyas can be achieved. That is the foremost duty of one and all.

It is gratifying to note that the new journal, "Gairvani" is trying to spread this culture. The word, "Gairvani" means "Deva Bhasha" or the language of the gods. The language of the gods will teach only the highest subject. That will teach one what his highest duty is and how to achieve the same. May Mother Saraswathi speak through the pages of the ,'Gairvani." May She bless you all to know Her and become Herself.



## Sri M. Ananthasayanam Ayyangar,

*Governor, Bihar.*

I am glad that you are publishing a journal and that the Sabha is growing in usefulness one in popularity.

Sanskrit has been the cultural language of India and has contributed largely to the unity of the country. The main literature in any language in India is derived

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



from Sanskrit. The North Indian languages are the offspring of Sanskrit and the South Indian languages have drawn greatly their vocabulary from Sanskrit words and expressions. Figures of speech, books on poetry and all arts, sciences and philosophy have all been written in Sanskrit. Sanskrit literature is rich, varied and comprehensive. It deals with all aspects of human life. It is therefore necessary that this language should be spread once again throughout the length and breadth of our land.

Even for a person to become a scholar in ones own language in India he must know Sanskrit well. Sanskrit may be made easy and people must begin to speak at home in Sanskrit A journal of the kind that you propose starting will help the students a great deal.

I wish your enterprise every success.



HIS HOLINESS SRI KANCHI KAMAKOTI PITHADHIPATHI

*Jagadguru Sri Sankaracharyaswamy*

KANCHEEPURAM.

" संस्कृतस्य विरलप्रचारेऽस्मिन् काले तस्य सुलभप्रचारार्थं " गैर्वाणी " नाम्ना त्रैमासिकपत्रिका आरभ्यत इति श्रुत्वा नितरां सन्तुष्टाः स्मः । सर्वेऽप्यास्तिका एतत्पत्रिकां स्वीकृत्य पत्रिकाया उत्तरोत्तराभिवृद्धये यतन्ताम् । "

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



*Panditaraja, Shastra Ratnakara,*
*Vidya Vachaspati*
ACHARYA T. A. V. DIKSHITAR
*Joint General Secretary:*
Sanskrit Vishva Parishad

Bharatiya Vidya Bhavan,
*BOMBAY - 7*

अलाभि यथासमयं भावत्कं पत्रम् । अवागम्यत च भवदुद्दिष्टं कार्यम् । अन्वभूयत च महानानन्दः ।

अद्यत्वे संस्कृतपत्रिकाणां बह्वीनां तत्र तत्र प्रकाशनं समुपलभ्यते । संस्कृतप्रचाराय बद्धपरिकराणां भवादृशानां पत्रिकाप्रकाशनमपि उद्दिष्टं फलं सर्वथा प्रसोष्यतीति सुदृढोऽस्ति नो विश्वासः ।

प्रार्थये भगवन्तं यथा तदीयया करुणातरङ्गितया दृशा अनुगृहीतो भवदीयः प्रयासः पत्रिकाप्रकाशनरूपः फलेग्रहिर्भूयादिति ।



MINISTER
INFORMATION & BROADCASTING,
NEW DELHI, INDIA.

*My best wishes for your new Journal.*

—:o:—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

वाणीं भजत गैर्वाणीम् !



# गैर्वाणी

वाणीं भज रे वाणीं
गैर्वाणीं भज रे वाणीम् ।

शुकपिकमधुरनिनादं
वाणीवीणानादं
मोहनमुरलीनादं
विस्मारयतीयं वाणी ॥ वाणीं ॥

व्यासभासवाणीयं
वाल्मीकिमधुरवाणीयं
कविकालिदासवाणीयं
भवभूतिकरुणवाणीयं ॥ वाणीं ॥

पञ्चकाव्यवाणीयं
प्रपञ्चख्यातवाणीयं
वेदवादवाणीयं
वेदन्तसारवाणीयं ॥ वाणीं ॥

आ. वरदराजः.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अञ्जलिः

गुणग्राहिषु दोषनिरासकेषु सहृदयेषु इदं सविनयं निवेद्यते यदियं गैर्वाणी वत्सरात्पूर्वमेव प्रकाशनीयापि आर्थिकदुस्थित्या लेखकानामालस्येन च एतावन्तं कालं व्यलम्बतेति। अपि च सदस्यतामादृतवन्तोपि सन्तः क्षमापणार्हा यतस्ते एतदवधि पत्रिकाप्रकाशनाऽभावमनुमोद्य अस्मासु च विश्वासमशिथिलयित्वा समवर्तन्त ।

अद्येदं सप्रश्रयमभिधीयते इतः परं पत्रिकेयं यथाकालं प्रकाशयिष्यते समेषां आदरपात्रं च भविष्यतीति ।

लेखकाः संस्कृताभिमानिनश्च सप्रश्रयं प्रार्थ्यन्ते स्वेषां रचनाभिः इमां नित्यं अलङ्कर्तुं एतस्याः सेवां चादर्तुम् । यदि रसिकैर्महाशयैः गैर्वाण्याः अभिवृद्ध्यै सूचनाः क्रियेरन् ताः यथायोग्यं स्वीक्रियेरन् ।

सर्वेपि संस्कृतरसिकाः छन्दतो वार्षिकं प्रदाय अस्याः पोषणे सर्वाङ्गसौन्दर्य-सम्पादने च साहाय्यमाचरन्तु ।

इति
प्रार्थयिता
**मं. वरदराजं पन्तुलु,**
प्रकाशकमन्त्री.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सभावृत्तम्

न ज्ञायते कस्मिन् क्षणे किं भविष्यति केन वा वस्तुना कीदृशं फलं भविष्यतीति। अल्पीयस्यपि उत्पत्तिस्थले गङ्गा स्वमार्गेणागत्यागत्य पाति प्राणिनः पावयति च। एवमेव अल्पारब्धमपि कार्यं फलति बहुफलानि दैवानुकूल्येन।

एषा संस्कृतभाषाप्रचारिणी सभा 1945 क्रैस्तवाब्दे सेप्टंबरमासस्य पञ्चमतिथौ बुधवासरे प्रातः सार्धनवघण्टाकाले सम्पादितस्वरूपा आन्ध्रप्रदेशस्थिते एर्पेडुनामके कुग्रामे। तदा तत्र कस्यांचन माध्यमिकपाठशालायां उपाध्याय-वृत्तिमवलम्ब्य वर्तमानाः संस्कृतोपाध्यायाः पञ्चषाः समेत्य संस्कृतोन्नत्यै उपाधिवितरणं अत्यधिकतया उपयोक्ष्यतीति निर्धार्य स्वस्मात् अल्पवेतनात् पञ्चाशद्रूप्यकाणि समचिन्वन्। तेनाल्पेनैव धनेन प्रचारादिक्रियाकलापं निर्वहन्तः ते परिचयः, अभिज्ञः, समर्थः, कोविदः इति परीक्षाः तत्तद्योग्यां पाठ्यप्रणालीं च निश्चित्य मुद्राप्य मद्रराष्ट्रे प्राचारयन्। तन्मित्राणि पण्डिताः उत्सुकाः सहृदयाश्च विद्यार्थिनः परीक्षाभ्यः समचोदयन् येन 1946 जनवरिमासे नवतिर्विद्यार्थिनः उपस्थिताः फलितानि च देशभाषापत्रिकासु प्राकाश्यन्त।

फलितांशदर्शनेन च समुत्साहिताः विद्यार्थिनः पण्डिताश्च उत्तरोत्तरपरीक्षा-सन्नाहमाचरन् नूतनाश्च एतत्परीक्षाक्रमविविदिषया बहुशः पत्रव्यवहारमाचरितु-मारभन्त। तदा सभायां पत्रव्यवहारायापि धनं न पर्याप्तमासीत्। तदा प्रथमे एव पण्डिताः पुनः संगम्य प्रत्येकमष्टरूप्यपरिमितं ऋणं अदुः, परन्तु ते न कदा-पि तन्नाददुः। सभा च तेनाल्पेनैव धनेन पत्रव्यवहारादिकं निर्वहन्ती पाठ्य-पुस्तकान्यानाय्य अभ्यर्थिभ्यः समर्पयन्ती कसीपनमात्रतृप्ता समजीवत्।

अभ्यर्थिनश्चाल्पसंख्याकाः तेभ्य आदीयमानं च शुल्कं पादरूप्यकप्रभृति रूप्यकद्वयपर्यन्तमेवासीत्। एतेनैव धनेन पत्रव्यवहारः प्रश्नपत्रमुद्रणं प्रेषणं उपाधिपत्रदानादिकं सर्वमपि कर्तव्यमासीत्। प्रष्टारः शोधयितारश्च निश्शुल्कमेव स्वकर्म निरवहन् प्रथमम्।

1946 वत्सरे अभ्यर्थिनां संख्या द्विशतीमस्पृशत्, तेन सभाया उत्साहोपि व्यवर्धत।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परन्तु अत्रान्तरे कैश्चिदनिवार्यैः कारणैः प्रधानमन्त्री परीक्षामन्त्री च स्वजीविकानिर्वाहार्थं चित्तूरनगरमागच्छताम् । तथापि ते तत्तत्पदवीषु अन्यान् स्वसहचरान्नियोज्यैव पादं प्राचालयन् । तथापि 1947 वत्सरे अभ्यर्थिनां संख्या न्यूनतामभजत, कार्यप्रतिरोधश्च समजनि । ततः पुनः प्राचीनप्रधानमन्त्री एव तत्र गत्वा सामाग्रीं मूलधनं स्वायत्तीकृत्य चित्तूरनगरमानयत् । तदा सामग्री एकस्यां अल्पीयस्यां जातीफलपेटिकायां प्ररोध्या असीत्, धनं च पञ्चाशद्रूप्यकपरिमितम् ।

सा च सभा इत्थं चित्तूरमनुप्राप्ता प्राचीनप्रधानमन्त्रिणः अपवरके कृतस्थितिः अभ्यर्थिनामाह्वानाय प्रचारमपेक्षमाणा प्राचीनपरीक्षापन्त्रिणः सहकारेण पुनः सावलम्बा व्यलसत । नगरे चास्मिन् निश्शुल्कपाठशालानां निर्वाहेण प्रधानमन्त्रिणः कृत्येन अचिरादेव सा प्रजादरपात्रमभवत् ।

1948 वत्सरे चेयं सभा रिजस्टरकर्मणा द्रढीकृता आन्ध्रेषु द्रविडेषु च अनुबन्धसंस्थाः परिक्लप्य सर्वाङ्गपूर्णतामापेदे । गुण्टूरनगरे मछलीपट्टने राजमहेन्द्रवरे पोन्नूरे हैदराबादे मद्रनगरे तिरुचिरापल्यां नागपट्टणे च अस्याः अनुबन्धसंस्था अभवन् । परीक्षाकेन्द्राणि च पञ्चाशदधिकानि विविधस्थलेषु समपद्यन्त । परीक्षाणां क्रमोन्नत्यां सङ्कटमुद्भाव्य तृतीया विचक्षणपरीक्षा योजिता । प्रतिवत्सरं दक्षिणायनोत्तरायणपरीक्षयोः सहस्राधिका अभ्यर्थिनः उपातिष्ठन् । एवमेषा सभा दक्षिणापथ एव दिव्यवाणीं दिव्यज्योतिः दीपयति स्म ।

एतस्याः प्रचाररीतिमभिवृद्धिं च समीक्ष्य नागपुरीयैः एतत्सनामा सक्रिया चैका सभाप्यायोजिता अधुनापि विलसति । किं बहुना, प्रभुत्वादरपात्रं संस्कृतविश्वपरिषदपि स्वस्वरूपकल्पने अनल्पमेतत्सभाक्षुण्णमेव मार्गमन्वसरदित्यत्र नातिशयोक्तिः । 1954 वत्सरे गुण्टूरनगरे संस्कृतसम्मेलनं निरवाह्यतानया सभया ।

सभायाः परिपुष्ट्यै बहवः सभ्यतां स्वीचक्रुरन्ये समार्पयन् स्वरचितानि पुस्तकानि अपरे च प्रदानम् ।

एवं दिनक्रमेणाभिवृद्धिं नीता इयं कार्यनिर्वाहाय एकं वैतनिकं लेखकमपोषयत् स्वनिवासाय चागृह्णात् अपवरकमेकं मास्येन । अपर्याप्ते अपवरके स्वकार्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निर्वाहाय 1959 वत्सरे अक्रीणात एकं प्राचीनं भवनं अष्टसहस्रव्ययेन । तत्प्रभृति सभायाः क्रिया विस्तृता अभवत् । एकः वैतनिकः कर्मचारी अयोजितः त्रयः उपाध्यायाश्च प्रवचनकर्मणि नियोजिताः । परश्शतं विद्यार्थिनः संस्कृतपठनाय उत्सुकाः सममिलन् । वाल्मीकि-कालिदास-गीताजयन्त्यादयः उत्सवाश्च निर्वाह्यन्ते काले काले । स्वीयो ग्रन्थालयश्च त्रिसहस्रग्रन्थैः उपेतः भारत्रयसहितः सभायै प्रदत्तो नगरस्थैः वणिक्प्रवरैः ।

एवं च भवनपुनर्निर्माणं चावश्यकमिति कार्यनिर्वाहकैर्निश्चितम् । तत्सा-हाय्यविज्ञापनादरवत आन्ध्रप्रभुत्वं पञ्चसहस्रमुद्राः प्रादात, परं पञ्चसहस्रमुद्राः सम्पाद्य दशसाहस्रया भवनपुनर्निर्माणाय चादिशत् ।

प्रभुत्वाज्ञामनुसृत्यैव निवेशनस्थलस्य पुरोभागे द्विभूमिकं भवनमुदस्थाप्यत ।

तत्पृष्ठतः सभाभवनं, तत्परतः स्नानभोजनादिगृहाणि च निर्मातुमभीष्टानि । तदर्थं च प्रयत्न आधीयते ।

आन्ध्रप्रदेशप्रभुत्वं भारतप्रभुत्वं च सभां स्वोपकार्यत्वेनाङ्गीचक्रतुः । एतत्स-भायाः अन्तिमा कोविदपरीक्षा च प्रभुत्वादरपात्रतां नेष्यते अल्पेनैव कालेन । प्रभुत्वं च स्वयमङ्गीकृत्य विश्वविद्यालयान् अङ्गीकारयितुं च यतते ।

एतदवधि पत्रिकाया अभावः सभामतीव क्लेशयति स्म । इदानीं सोपि लोपो दूरीक्रियते । यदि महतां आदरो भवेत् सर्वाङ्गसम्पूर्णा इयं भारतजातेः भारतीयसंस्कृतेश्च समुत्तेजनेन स्वधर्ममनुवर्तिष्यते ।

इति

ति. कं. तिरुवेङ्कटाचार्यः

प्रधानमन्त्री.





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सविनयं निवेदनम्

पण्डितवर्याः,

सुविदितमेव सर्वेषां विद्वद्वरेण्यानां यत् संस्कृतं हि सकलभाषासम्मेलन-सीमाभूमिः इति, संस्कृतेन सम्बन्धः न केवलं भारतीयभाषाणामेव अपितु अभारतीयानां भाषाणामपीति च। संस्कृते साम्प्रतमपि सजीवानां विश्वभाषाणां मकुटायमानं वस्तु बहुलं वरीवर्तत इति नात्र सन्देहलेशः।

तादृशी ज्ञानराशिः वेदेषु, पुराणेषु, इतिहासेषु, शास्त्रेषु, काव्यनाटकादिषु च बहुधा निहितं दरीदृश्यते। अतः अभारतीयानामपि संस्कृतभारती अवश्या-ध्येतव्या समजनि।

एतादृश्याः संस्कृतभाषायाः सेवायै इयं सभा षोडशवर्षेभ्यः परीक्षाप्र-चालनेन, सरलसंस्कृतग्रन्थप्रकाशनेन, विद्वत्सम्मेलनघटनेन, उपन्यासप्रदानेन, बहुमतिप्रदानेन च अनवरतं यतते।

अधुना च तादृशसेवासरण्यां इतोधिकप्रयोजनसाधनाय "गैर्वाणी" नाम्नीं पत्रिकां निर्वोढुं बद्धपरिकरा इयं भवतां सादरसहकारमभिलषति।

अतः प्रार्थये कृपया भवन्तः सुलभसंस्कृते, आन्ध्र्यां द्राविड्यां वा कथा-त्मिकां, सम्भाषणात्मिकां, व्यासरूपां वा वचनरचनां विलिख्य प्रेषयेयुरिति।

इति<br>
भवदीयः<br>
यं. वरदराजं पन्तुलु<br>
प्रकाशकमन्त्री.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# मातृसान्त्वनम्

अम्ब त्वामविचार्य मूढमनसः कष्टम् ! मृतां मन्वते
निन्दन्त्यप्यधमास्त्वयैव मधुरां वाचं च ये शिक्षिताः ।
दुःशीला भवदीयपुत्रहतका इत्येतदस्वादु यत्
स्वान्तं मे तुदति प्रगाढमखिलव्याहारसञ्जीवनि !

विविधा देशभाषा या एतस्यां भारतावनौ ।
तासां जीवितभूताऽसि निर्जीवा भवती कथम् ?

उच्चावचं द्वन्द्वशतैरभीक्ष्णं
क्लेशैः समाकीर्णपथं कठोरैः ।
जगन्महारण्यमिदं कृतं यैः
स्ववाग्भिरानन्दमयं कवीन्द्रैः ॥

तादृशो भावितात्मानः कवयस्त्वन्मुखेन हि ।
मुहुरास्वादयन्त्यस्मान् नवान् भावसुधारसान् ॥

ते सर्वे भवतीमेव बहुमानपुरःसरम् ।
बहुधाऽऽराधयाञ्चक्रुः पुनन्तो रसनाः स्वकाः ॥

परमममृततत्त्वं दर्शयित्वाऽद्वितीयं
जननमरणदुःखव्याकुलेभ्यो नरेभ्यः ।
ददति निगमवाचो याः स्थितिं मृत्युदूरां
जनिरसि किल तासां तत्कथं स्यान्मृतिस्ते ॥

अद्यापि श्रृणुमो देवि देवर्षीन् विदितात्मनः ।
त्वन्मुखेनैव वदतो दिव्योपनिषदं वचः ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनुत्तमा संस्कृतिरस्मदीया त्वय्येव भद्रं निहिता पुराणी ।
गीतास्यतः संस्कृतभारतीति निःशेषवाक्संस्करणाच्च हेतोः ॥

महिमानमनादृत्य तव जल्पन्ति केचन ।
दुर्मेधसो मृतेति त्वाममृतां मृतजीवनीम् ॥

आसीत्पुरा नूनमनूनलक्ष्मीः
तवाम्ब साऽद्यापि न नष्टभूमा ।
अहीनभूत्यै सुपरिश्रमान्नः
कल्याणमस्यै भवताद्भविन्यै ॥

इति
**वि. आंजनेयशर्मा,**
यं. ए. शिरोमणिः.



# आचार्यमहिमा

विदितमेवैतत् सर्वेषां यत् लोके सुखमेव सर्वैः प्रार्थ्यते इति । तादृशं सुखं कथं वा लभ्येत इति विचारः न केनापि क्रियते । दैवकृपां विना कदापि सुखं न भवेत् । दैवं तावत् सर्वदा तिरोहितं एव अनुगृह्णाति न तु प्रत्यक्षम् । "माता पिता गुरुर्दैवं" इति त्रेधा दैवं अनुगृह्णाति । माता प्रसूते पुत्रं, पिता तं पोषयति, गुरुस्तावत् ज्ञानप्रदानेन पुनर्जन्म ददाति । गुरुरेव अज्ञानं निवर्तयति । गुरुशब्दनिर्वचनमेव तद्दर्शयति ।

गुकारस्त्वन्धकारः स्यात् रुकारस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते इति ॥

गुरोः आचार्यइत्यपरं नाम ।

"आचिनोति हि शास्त्रार्थं आचारे स्थापयत्यपि ।
स्वयं च कुरुते यस्मात् आचार्यस्त्वभिधीयते" ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरुस्तावत् ईश्वरांश एव नात्र संशयलेशोऽपि । ईश्वरापराधः कदाचित् निवर्त्यः भवेत् न तु गुर्वपराधः । अत एव

" शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
शिव एव गुरुस्साक्षात् गुरुरेव शिवस्स्वयम् " इति वदन्ति ।

त्रिशङ्कुः इति कश्चित् राजा सशरीरं स्वर्गं जिगमिषन् स्वकुलगुरुं वसिष्ठं पृष्ट्वा तेन प्रथमं निराकृतः अनन्तरं तत्पुत्रैश्च निराकृतः शापितः च । सः चण्डालतां गतः तपस्यन्तं विश्वामित्रं स्वमनोरथं पूरयितुं प्रार्थयामास । तदर्थं सः मुनिः कमपि यागं आरभत । तदानीं आहूताः देवाः हविर्भागादानाय नागताः । तेन क्रुद्धः स विश्वामित्रः स्वतपोबलेन त्रिशङ्कुं स्वर्गं प्रापयत् । इन्द्रः गुरुशापहतं तं अधः पातयामास । तदानीं " त्रायस्व त्रायस्व " इति उच्चैः त्रिशङ्कुः चुक्रोश ।

" तत्रैव तिष्ठ " इति उक्त्वा स्वर्गान्तरसिसृक्षया नक्षत्रगणान् देवांश्च प्रथमं स्रष्टुं आरभत मुनिः । तेन भीताः देवाः सर्षिसङ्घा ब्रह्मणा साकं आगत्य हेतपोधन, गुरुशापहतः अयं स्वर्गं आरोढुं नार्हति । अतः अत्रस्थ एवायं स्वर्गसुखं लभताम् इति ऊचुः । विश्वामित्रस्तथेत्यङ्गीचकार ।

" अयं राजा महाभाग गुरुशापपरिक्षतः ।
सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥ इति रामायणे ।

एवमेव कर्णः आत्मानं भार्गवं ब्राह्मणं ब्रुवन् शुश्रूषमाणः परशुरामात् ब्रह्मास्त्रं लेभे । कदाचित् कर्णस्य उत्सङ्गे शिरो निधाय स्वपन् आसीत् गुरुः परशुरामः । तदानीं कश्चित् द्रोणकीटः तस्य उत्सङ्गं दष्टवान् । तस्मात् रुधिर-प्रवाहः समभवत् । कर्णः गुरोः निद्राभङ्गभयात् वेदनां सर्वां असहत । प्रबुद्धः सः



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परशुरामः रुधिरस्रावयुक्तं तं कर्णं कीटं च दृष्ट्वा तं तस्य जातिं पप्रच्छ "न त्वं ब्राह्मणः, अधृष्टा हि सा जातिः" इति । भीतः सः कर्णः स्वस्य जातेः तिरोधानेन विद्याभ्यासं च ऊचे ।

अनन्तरं परशुरामः "यस्मात् त्वं तिरोधानेन मत्सकाशात् विद्याभ्यासं कृतवानसि तस्मात् मत्तः अभ्यस्ता सा विद्या आवश्यकसमये विस्मृता भवतु इति" शशाप । तेनैव कारणेन कर्णः अन्तकाले ब्रह्मास्त्रप्रयोगं अजानानः ममार । श्रीमद्रामचन्द्रोऽपि ताटकावधसमये स्त्रीवधं प्रति शङ्कितोऽपि गुरोः विश्वामित्रस्य वचनेनैव तां अवधीत्, न तु स्वच्छन्दम् । गुर्वनुग्रहं विना विद्याप्राप्तिः श्रेयश्च कदापि न भवेत् । विद्यासाधनानि त्रीण्येव । अत एवाहुः —

"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थो नोपलभ्यते" ॥ इति ।

गुरुशुश्रूषैव विद्याभ्यासे श्रेष्ठतमं साधनं भवति । पूर्वं आपोदस्य धौम्यस्य सकाशे बहवः शिष्याः विभ्यासं अकुर्वन् । तदानीं उपमन्युः नाम शिष्यः विद्याभ्यासाय तं उपागच्छत् । सः गुरुः प्रथमं तं गाः चारयितुं आदिदेश । सः गाश्चारयित्वा गुरुकुलमागम्य गुरुं प्रणनाम । तं पीवानं दृष्ट्वा गुरुः "केन वृत्तिं कल्पयसि ?" इति पप्रच्छ । भैक्षेण वृत्तिं कल्पयामि इत्युक्तवति तस्मिन्, गुरवे अनिवेद्य भैक्षं नोपयोक्तव्यं इत्युवाच गुरुः । सः भैक्षं चरित्वा गुरवे न्यवेदयत् । स गुरुः तत्सर्वं भैक्षं अगृह्णात् । उपमन्युः परेद्युः प्रथमं भैक्षं गुरवे दत्वा द्वितीयं भैक्षं स्वयमभक्षयत् । एतत् ज्ञात्वा गुरुः द्वितीयं भैक्षचरणं न्यषेधत् । सः क्रमशः गवां पयः अनन्तरं फेनं च उपयुञ्जानः गाः अचारयत् । तत्सर्वं अपि गुरुणा प्रतिहतं बभूव । तथाऽपि स उपमन्युः गाः चारयन् बुभुक्षया पीडितः अर्कपत्राणि अभक्षयत् । तेन सः अन्धः बभूव । अन्धोऽपि चङ्क्रम्यमाणः सः कूपे पपात । तं अन्विष्यन् आगतः गुरुः कूपे पतितं "अश्विनौ स्तुहि" इत्युक्त्वा गतः । तेन उपमन्युना स्तुतौ तुष्टौ च अश्विनौ आगत्य कमपि अपूपं प्रदर्श्य खादितुं आदि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिशतुः । सः गुरवेऽनिवेद्य न भक्षयामीत्युवाच । "आवाभ्यां दत्तः अपूपः तव गुरुणाऽपि खादितः । त्वमपि तथैव कुरुष्व" इत्युक्तोऽपि स नानुमेने । तस्य गुरुभक्त्या तुष्टौ तौ तं चक्षुष्मन्तं हिरण्मयदन्तं च अनुगृह्य "सर्वाणि धर्मशास्त्राणि सर्वे वेदाश्च ते प्रतिभास्यन्ति" इत्युक्त्वा जग्मतुः ।

गुरुः एतत सर्वं विज्ञाय "यथा आश्विनावाहतुः तथैवास्तु" इति अनुजग्राह । अहो ! पश्यत आचार्यमहिमानम् । अतः सर्वैरपि गुरुभक्ति-परैः भाव्यम् । इतिशम् ।

टि. महादेवशास्त्री,
शिरोमणिः



कथानिका

## चोरवञ्चनम्

अन्ध्रकर्णाटकसार्वभौमस्य कृष्णदेवरायस्य आस्थान्यां कविः तेन्नालिराम इति कश्चिदासीत् । स परिहासशीलः धीमान् युक्तिमान् च आसीत ।

एकदा राजाश्रयेण धनशालिनः तस्य गृहे चौर्यं कर्तुं धनं च अपहर्तुं चत्वारः चोरप्रवरा आगच्छत् । तेषु च कुड्यपार्श्वे निलीय गृहान्तर्व्यवहारं अवधानेन परिशीलयत्सु तेन्नालिरामः तद्भावमाकलितवान् । स एतदजानन् इव स्वजायामेवमाह-अयि, अधुना अस्मिन्नगरे चोरव्यथा अतीव भवतीति श्रूयते । अस्मद्गृहे च प्रभुदत्तं महार्घं सुवर्णरत्नादिकं बहु वर्तते । एतच्च सर्वैरपि ज्ञायते च । तत्कथं तद्रक्षणीयमस्माभिः ? इति । सा च प्रत्युत्तरमदात्-नाथ, दृढतमायां पेठिकायां निक्षिप्य बलीयस्या मुद्रया मुद्रयावः । तथा चेत् तच्चोराणां असाध्यं भवेत् इति । तच्छ्रुत्वा सोवदत् — मुग्धे, चोराणां पेटिका मुद्राश्च निरोधका न भवन्ति । ते तां अपि पाटयेयुः, अथवा पेटिकामेव

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नयेयुः । तस्मात् मयैका युक्तिरालोचिता । रत्नादिकं पेटिकासु निधाय उद्यान-कूपे पातयेव । तेन आवां निश्चिन्तं स्वपिष्यावः, ते च निराशाः निवर्तिष्यन्ते इति । एतत्सम्भाषणं सर्वमपि चोराः गूढाः अशृण्वन् अहृष्यन् च ।

अनन्तरं प्रियायै सूचितरहस्यः तेन्नालिरामः घरट्टोलूखलादिकं शिलाजातं पेटिकायां निक्षिप्य मुद्रयित्वा भार्यासहायः कूपसमीपमानाय्य तद्भारं तत्र निक्षिप्तवान् गृहान्तः अगच्छत च । तत्पतनध्वनिमाकलय्य चोराः तत्र आगताः घटीयन्त्रमाकृष्य जलमुद्धर्तुं प्रारभन्त । तेन्नालिरामश्च निभृतमागत्य तैरुद्धृतं जलं कदलीवाटिकायै प्रासारयन् आलवालानि आपूरयति स्म ।

जलसमृद्धः स कूपः निरन्तरोद्धृतजलोपि न तलमदर्शयत । ते च चोराः द्रुतं जलमवसादयितुं पेटिकां च आहर्तुं महावेगेन घटीयन्त्रं मग्नोन्मग्नं अकुर्वन् । यदा चारुणोदयोऽभवत् । मनुष्याश्च इतस्ततः सञ्चरन्ति स्म तदा धृष्टः तेन्नालिरामः उच्चैराक्रोशत् — भोश्चोराः, अलमलमायासेन । अस्मत्कदली-वाटिका जलपूर्णा । इतः न जलमावश्यकम् । तद्विरमत जलोद्धरणं इति । तच्छ्रुत्वा भीता लज्जिताश्च ते चोरा प्रपलायिताः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ग्रन्थस्वीकृतिः

## १. आत्रेयश्रोत्रानन्दः

मूल्यम् ५० पैसाः

स्तुतिरूपमेतत्पुस्तकं मछलीपत्तननिवासिना दत्तात्रेयोपासकेन श्रीमता नादेल्ल-वंशजेन दक्षिणामूर्तिना विरचितम् । अष्टोत्तरशतश्लोकरूपमेतत स्तोत्रं रचयितुः दत्तानुग्रहजां कविताधारां प्रकटयत श्रोतृणां सत्ययेव आनन्दमाविर्भावयति । अत्र प्रधानतया बह्वयः दत्तलीला वर्णिताः । बहुलतया दत्तात्रेयावतारस्य नरहरि-योगिनः प्रभावोत्र निरूपितः । दत्तात्रेयकटाक्षमपेक्षमाणानां पारायणार्होयं ग्रन्थः ।

एकमुदाहरणं —

कृष्णातीरे चरन्तं नृहरिगुरुवरं प्रेरितः प्राप्य काल्या
धीमन्दः छिन्नजिह्वो घनविबुधनुतो निन्दितो मन्दमत्या ।
यत्पादाम्भोजभृङ्गोऽभवदुदितकृपापूर्णचित्ताच्च दत्तात्
हस्ते न्यस्ते तु मस्ते प्रविदिततनिगमो मां तथा कर्तुमीडे ॥

प्राप्तिस्थानम् — नादेल्ल दक्षिणामूर्तिः, मसुलीपेटम्, कृष्णामण्डलम्, आन्ध्रप्रदेशः ।





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# २. न्यायलघुव्याकरणम्

मूल्यम् रु. ३—००

इदं पुस्तकं जाफ्नानगरनिवासिना श्रीमता सुब्रह्मण्यशास्त्रिणा शिरोमणिना लिखितं प्रकाशितञ्च । इदं संस्कृतव्याकरणं सिंहलदेशे पट्टपरीक्षार्थिनो विद्यार्थिनः मनसि निधाय भाण्डार्करप्रभृतिभिः क्षुण्णेन मार्गेण द्रविडांग्लविवरणाभ्यां सह समायोजितम् । संस्कृताभ्यासकांक्षिणां एतत्पुस्तकमतीवोपकरीति

इदं, भारतदेशे संस्कृतभाषाप्रचारिणी सभा चित्तूरु (A. P.) इत्यत्र, सिंहले **के. सुब्रह्मण्यशास्त्री,** ९३ हेरम्बभवन्, टेम्पुल् रोड्, जाफ्ना, सिलोन् इत्यत्र च लभ्यते ।



# ३. न्यायलघुव्याकरणाभ्यासपुस्तकम्

(WORK BOOK)

मूल्यम् रु. ६—००

इदमपि पूर्वोक्तव्याकरणकर्त्रैव रचितम् । स्वव्याकरणपाठक्रमेण अभ्यासरीतिरत्र निरूपिता । अत्रत्यानां सर्वेषां अभ्यासानां लेखनेन माणवकः संस्कृतवाक्यनिर्माणे पटुर्भवेत् । अस्यापि प्राप्तिस्थानं पूर्ववदेव ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# ४. पेन्निधि

मूल्यम् रु. १—००

अत्र रामायणे विद्यमानानां व्यक्तीनां परिसराणां च साम्यवैषम्यरूपः तुलनात्मको विमर्शः आन्ध्रभाषया निष्पक्षपातदृष्ट्या निर्व्यूढः । पाठकानां प्रोत्साहमादधती, रचयितुः आ. वरदराजस्य शैली निरनुरोधा प्रसरन्ती आनन्दयति चेतः ।

प्राप्तस्थानम् —

आ. वरदराजन्,
हिन्दी पण्डिट्, पीलेरु.



# ५. आशलु–आशयालु

मूल्यम् रु. १—००

एतदपि पुस्तकं श्रीमता **आ. वरदराजपण्डितेनैव** रचितम् । अत्र भिन्नभिन्नासु अवस्थासु मनुजस्य भावाः यथा विपरिणमन्ति, यथा च आशयानां आशयनां च सङ्घर्षो भवति इत्यादिकं बहुललितया युक्तियुक्तया आन्ध्रभाषया निरूपितम् ।

प्राप्तस्थानम् —

आ. वरदराजन्,
हिन्दी पण्डिट्, पीलेरु.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





श्री सि. यस्. राजारां राजेन्द्रनाथः M. A.,

गोबिचेट्टिपालयम्

जन्मवर्षः १९०१.

१९५३ वर्षे संस्कृतव्यासङ्गप्रारम्भः

परिचयाऽभिज्ञविचक्षणसमर्थपरीक्षाः उत्तीर्य अद्य यावत्
धर्मशास्त्रकोविदः, ज़्यौतिषकोविदः,
वेदान्तकोविदः, आयुर्वेदकोविदः, पुराणकोविदः,
मीमांसाकोविदः, न्यायकोविदः अभूत ।
शुभकृद्दक्षिणायनपरीक्षासु अलङ्कारकोविदः अभूत ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सुभाषितानि

( श्रीमता ना. रामनाथार्येण सङ्कलितानि )

The Sanskrit literature abounds in didactic verses. It is proposed to give hereunder and in the further issues of this journal a few of the wellknown and oftquoted verses with a free English rendering for being memorised by students of Sanskrit.

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ १ ॥

Great deeds are accomplished by self effort but not by (idle) wishes; the animals do not enter the mouth of a sleeping lion.

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ २ ॥

Our lives are not eternal; our prosperity is not permanent; death is always very near; therefore one must garner virtuous deeds.

चिन्तनीया हि विपदां आदावेव प्रतिक्रियाः ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ ३ ॥

One should think out remedies near by for any mishap; it is not wise to dig a well (to quench the fire) when the house is on fire.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुंबकम् ॥ ४ ॥

Considerations such as he is my relative, he is a stranger, belongs to a low-minded person; but the nobleminded regard the whole world as their family.

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्र विप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बांधवः ॥ ५ ॥

He is a kinsman who is attached to one in joy and in sorrow; when the country is famine stricken or is overthrown, at the royal gate or in the burial ground.

नाऽकाले म्रियते जन्तुः विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ६ ॥

Although pierced by hundreds of arrows no creature will die till the appointed hour has arrived; but when the time has arrived, even at the touch of (pierced by) a Kusa grass, it will not live.

को विदेशः सविद्यानां कः परः प्रियवादिनाम् ।
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ॥ ७ ॥

What is a foreign land to the learned; who is a stranger to persons who talk pleasingly; what is burdensome to the industrious; what is distant to the enterprising.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अल्पानामपि वस्तूनां संहितिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैः बध्यन्ते मत्तदन्तिनः ॥ ८ ॥

Objects are accomplished by the union of even small things; infuriated elephants are tied down by means of grass twisted into ropes.

निर्गुणेष्वपि सत्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चंद्रश्चांडालवेश्मनः ॥ ९ ॥

Nobleminded persons show compassin even towards creatures devoid of any merit; the moon does not withhold her light from the residence of a low born person.

शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः ।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ १० ॥

Purity, generosity, courage, equanimity in pleasure and pain, politeness, and affection and truthfulness are the qualities of a true friend.

अजरामरवत्प्राज्ञः विद्यामर्थं च चिंतयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ११ ॥

A wise man should contemplate over acquisition of learning and wealth as though he were always young and immortal; he should practise Dharma as though he were caught hold of by the hair (forelock) by Death.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥ १२ ॥

The four fold benefits viz longevity, learning, fame and strength accrue to a persone who is prone to prostrate before elders and constantly serve them.

अर्थानामार्जने दुःखं आर्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ १३ ॥

Fie on riches which are difficult to acquire, difficult to preserve, difficult to earn or spend.

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रंथकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ १४ ॥

I shall summarise in half a verse the teachings contained in the vast literature; it is meretorious to help and sinful to harm, others.

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १५ ॥

What is the use of learning to a person who is not possessed of intelligence; what is the use of a mirror to one who is blind of both eyes.

[ सशेषम् ]



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुस्तकालय
0-77925



जे. कल्याणी
ताम्बरम्
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णा
शार्वरिदक्षिणायनपरीक्षासु ।



यस्. जया
मैलापूरु
विचक्षणपरीक्षायां सर्वप्रथमतया उत्तीर्णा
शार्वरिदक्षिणायनपरीक्षासु ।



यन्. रामचन्द्रन्
मन्नारगुडि
परिचयपरीक्षायां सर्वप्रथमतया उत्तीर्णः
शार्वरिदक्षिणायनपरीक्षासु ।



कटुकोज्वलराजः
कोत्तगूडेम्
परिचयपरीक्षायां सर्वप्रथमतया उत्तीर्णः
शार्वर्युत्तरायणपरीक्षासु ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





आर्. वत्सला
वड्डूरु
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णा
शार्ङ्युत्तरायणपरीक्षासु ।



यस्. विजयलक्ष्मी
मन्नारुगुडि
विचक्षणपरीक्षायां सर्वप्रथमतया उत्तीर्णा
प्लवोत्तरायणपरीक्षासु ।



जि. वेंकटरत्नम्
अनन्तपुरम्
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णः
प्लवोत्तरायणपरीक्षासु ।



हेच्. वेणुगोपाल्राव्
आदोनि
परिचयपरीक्षायां सर्वप्रथमतया उत्तीर्णः
प्लवोत्तरायणपरीक्षासु ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सभायाः शाखाः

## १. हैदराबाद (आ० प्र०)

अध्यक्षः — श्री यन्. नरसिंह अय्यंगार्, अड्वोकेट्
उपाध्यक्षौ — श्री बी. वि. सुब्बरायुडु, अड्वोकेट्
श्री ई. वि. वि. राघवाचार्यः यं. ए.
कार्यदर्शी — श्री चलंचर्ल रंगाचार्यः, शिरोमणिः

### कार्यस्थानम्

श्रीनिवासविलासः, 1-9-625/8 विद्यानगर्
हैदराबाद् - 7.

## २. मद्रास्

अध्यक्षः — श्री सुन्दरकृष्णमाचार्यः, प्रिन्सिपाल् हिन्दीविद्यापीठः
कार्यदर्शी — श्री के. यस्. राघवाचार्यः, शिरोमणिः.
कार्यस्थानम् — भारतीयविद्यामन्दिर, 89 V. M. Street,
मैलापूर्, मद्रास् - 4.

## ३. गुंटूरु

अध्यक्षः — श्री रा. लिंगनसोमयाजुलु, न्यायवादी
कार्यदर्शी — श्री ने. सुब्बरायशास्त्री, विद्वान्, विद्याप्रवीणः
कार्यस्थानम् — B1/82, पट्टाभिपुरं, गुंटूरु

## ४. नागपट्टिनम्

अध्यक्षः — श्री यस्. नारायणस्वामि अय्यर् B A., L. T.,
कार्यदर्शी — श्री टि. महादेवशास्त्री, शिरोमणिः
कार्यस्थानम् — नेषनल हैस्कूल्, नागपट्टिनम्.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ५. मचिलीपट्टणम्

अध्यक्षः — श्री वल्लभज्योस्युल आनन्दकृष्णाराव् य. ए. अड्वोकेट्.
कार्यदर्शी — श्री गु. रामानुजाचार्यः, विद्वान् मीमांसाव्याकरण-
शिरोमणिः.
कार्यस्थानम् — राजुपेट, मचलीपट्टणम् (आ. प्र.)

## ६. तिरुच्चिरापल्ली

अध्यक्षः — श्री पण्डित मल्लाजी रत्नशर्मा.
कार्यदर्शी — श्री ए. सुब्रह्मण्यशास्त्री, यं ए.
कार्यस्थानम् — 11, ब्रिटोस् कालनी, वेस्ट्वेलिवर्ड रोड्,
तिरुचिरापल्ली.

## ७. कूचिपूडि

अध्यक्षः — श्री पी. वी. वि. प्रसाद राव्
B. A. (Hn); B. Ed.,
कार्यदर्शी — श्री पी. यल्. नारायणशास्त्री.
कार्यस्थानम् — श्री कोंगटिवारि हैस्कूल्, कूचिपूडि,
गुंटूरु मण्डलम्.

## ८. मदुरै

गौरवाध्यक्षः — श्री T. S. कृष्ण
T. V. S. Managing Director.
अध्यक्षः — श्री श्रीकण्ठशास्त्री, M. A.,
Principal, R. D. S. Collage.
कार्यदर्शी — श्री D. राजगोपालन, पण्डिट्
कार्यस्थानम् — सेतुपति हैस्कूल्, मदुरै.

## ९. कोयंबत्तूरु

अध्यक्षः — श्री सुब्बुरत्नं अय्यर, अड्वोकेट्.
कार्यदर्शी — श्री जी. यस्. श्यामाचार्यः, व्याकरणशिरोमणिः.
कार्यस्थानम् — 162, तेलुगुब्राह्मणवीथी कोयंबत्तूरु 1.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# चीनामुष्करास्तिरस्क्रियन्ताम् !

"अज्ञातः"

गृहे गृहे प्रवर्त्यतां प्रयाणमङ्गलं जनैः
निवर्त्यतामधैर्यमग्रगामिभिश्च भूयताम् ।
निशातनूतनायुधैर्विबुध्यतां प्रयुध्यतां
निरुध्यतां प्रखण्ड्यतां जनस्य चीनको भृशम् ॥

विहायसाऽशुयानकैर्महीयसा बलेन च
प्रभूतटांकवाहनैर्दृढं परीवृतानमून् ।
घनस्फुलिङ्गवर्षिभिर्धनैश्शतघ्निभिर्झटि–
त्यभिद्रुतान् दहन्तु तूर्णमाततायिचीनकान् ॥

अरे शूरवीरा महासत्त्वसारा
भगो भारतीया स्समायात धीराः ।
धराक्रामकान् धर्मविध्वंसमूलान्
खलान् चीनकान् मारयन्त्वात्मगुप्त्यै ॥

शूलिशूलशिखराग्रकर्कशा–
न्यच्युतायुधसदृक्षकाण्यपि ।
वज्रघर्घररवाणि चायुधा–
न्यद्य पातयत चीनमूर्धसु ॥





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# जागृत !

ति. कं. तिरुवेङ्कटाचार्यः

जागृत भारतवीराः ! परि–
हरत जनन्याः कष्टं रे ॥ जागृत ॥

धरत करे करवालं, दृढ–
कवचितदेहाः प्रयात रे ।
विशत हिमाद्रेः प्रस्थान्, नलि–
काग्निन् बर्षत शत्रुषु रे ॥ जागृत ॥

चीनामुष्करहतकान्, परि–
हीनान् कुरुतात्यन्तं रे ।
हिमवत्कुहरेष्वनिशं प्रति–
नादयतात्मस्फोटान् रे ॥ जागृत ॥

प्रतिपदखण्डितचीनान् परि–
धावयतात्मस्थानं रे ।
लंघयताद्रिशिखरा–
ण्याक्रमत त्रिविष्टपपृथ्वीं रे ॥ जागृत ॥

अम्मेरिकांग्लसहाया रे
विचरत स्वैरं युद्धे रे ।
निष्कंटलितां रचयत रे
भारतभूमिं शूरा हे ॥ जागृत ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# शुभकृद्वत्सरीया:

## उत्तरायणपरीक्षा:



एतद्वत्सरीया उत्तरायणपरीक्षा: 1963 मार्चमासे 2, 3, 4 तिथिषु-प्रचलिष्यन्ति । तदर्थं सशुल्कमावेदनपत्राणि जनवरि 20 तिथेः पूर्वं प्रेषणीयानि । विलम्बशुल्केन साकं जनवरिमासान्तपर्यन्तं तानि स्वीक्रियेरन् ।

| | | | |
|---|---|---|---|
| १. | परिचयपरीक्षाशुल्कम् | रु० | १—५० |
| २. | अभिज्ञपरीक्षाशुल्कम् | ,, | ३—०० |
| ३. | विचक्षणपरीक्षाशुल्कम् | ,, | ४—०० |
| ४. | समर्थपरीक्षाशुल्कम् | ,, | ६—०० |
| ५. | कोविदपरीक्षाशुल्कम् | ,, | १०—०० |
| | समर्थपरिक्षाया: प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | कोविदपरीक्षाया: प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | विलम्बशुल्कम् | ,, | ०—५० |
| | विशेषानुमतिशुल्कम् | ,, | १—०० |
| | केन्द्रपरिवर्तनशुल्कम् | ,, | ०—५० |

आवेदनपत्रादिकं विना मूल्यं सभायां लभ्येत ।

परीक्षामन्त्री.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# प्रार्थना

अयि भोस्सहृदयप्रवराः !

आनयत गैर्वाणीम्
अनुमोदध्वमस्मत्सेवाम्
आपिबत सारस्वतरसम्
अलङ्कुरुत भवद्रचनाभिरेनाम्
अभिवर्धयत सभायाः कार्यक्षेत्रम्
अनुभावयत बालान् शुभोदर्कम्
अनुशीलयताऽस्मत्संस्कृतिं महतीम्
अवत भारतभारतीं इमां गैर्वाणीम्

### गैर्वाण्याः पुरस्कारः

| | | | |
|---|---|---|---|
| महाराजपोषकः | रु. | 116 | प्रदाता |
| राजपोषकः | ,, | 60 | ,, |
| पोषकः | ,, | 30 | ,, |
| अभिमानी | ,, | 10 | ,, |
| सदस्यः | ,, | 1–50 | ,, |

प्रार्थयिता
ति. कं. तिरुवेङ्कटाचार्यः



पि. पुण्डरीकाक्षशर्मा
मुत्तुकूरु
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णः
शुभकृद्दक्षिणायनपरीक्षासु ।



श्री. भा. रघुनाथाचार्यः
मचिलीपट्टणम्
परिचयपरीक्षायां सर्वप्रथमतया
उत्तीर्णः शुभकृद्दक्षिणायनपरीक्षासु ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskritha Bhasha Pracharini Sabha, Chittoor.

## शुभकृद्दक्षिणायनपरीक्षाणां फलितांशाः

## Results Of September Examinations 1962.

The following are the Registered Numbers of successful candidates who appeared for the Sanskrit Examinations held on 1st, 2nd aad 3rd September 1962, by the Samskritha Bhasha Pracharini Sabha, Chittoor.

### परिचयः PARICHAYA

First Class: 11 to 15 18 25 to 29
35 82 85 87 88 135 138 140 143
155 162 165 167 191 194 241 245 265
268 269 272 281 282 291 293 to 295 297
298 301 303 307 309 313 334 338 341
346 348 349 360 416 417 426 428 471
477 479 488 515 and 519.

Second Class: 16 17 22 24 40 to 42
51 78 79 86 89 129 to 133 137 144
147 150 152 to 154 158 160 164 174 177
178 187 190 192 195 247 249 264 266
267 271 273 274 278 280 283 286 to 288
296 302 304 310 312 315 318 335 337
342 to 345 347 350 359 367 to 369 430 435
444 to 446 457 465 469 473 475 478 480
489 499 505 511 512 516 540 541 and
543.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



Third Class: 1 to 4 19 to 21 36 38
39 53 54 90 128 139 141 145 148
149 151 157 159 161 163 175 181 193
197 198 244 248 273 277 284 289 290
292 299 305 306 314 319 356 357 361
362 366 371 376 418 429 431 443 463
466 470 472 476 481 482 496 497 498
501 503 504 506 518 539 and 542.

## अभिज्ञः ABHIGNA

First Class: 59 83 202 320 327 340
387 423 437 439 441 460 and 492.

Second Class: 6 7 9 10 23
31 32 43 46 48 61 63 69 74
75 84 168 208 209 211 212 214 252
321 322 328 330 332 379 to 381 388 421
436 440 442 458 459 461 487 491 523
524 538 and 544.

Third Class: 5 30 44 45 47 49
58 65 67 68 71 to 73 91 to 93 103
106 108 120 121 199 to 201 203 204 206
210 215 253 255 256 324 326 329 331
351 377 450 to 452 467 486 521 525 526
and 527.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## विचक्षण: VICHAKSHANA

First Class: 403 only.

Second Class: 100 109 117 166 216 218 219 221 222 226 228 230 234 to 236 257 259 262 392 to 395 397 398 400 401 404 405 411 448 449 455 468 533 534 and 535.

Third Class: 95 to 99 111 to 116 220 223 225 227 229 232 233 237 238 240 258 261 352 383 384 399 402 406 to 410 453 and 454.

## समर्थ: SAMARTHA

First Class: Nil.

Second Class: 415 and 537.

Third Class: 414 only.

Passed in Part I only: 385 386 389 and 425.

Passed in Part II only: 231 only.

## कोविद: KOVIDA

First Class: Nil.

Second Class: 390 only.

Third Class: 156 and 391.

Passed in Parts II and III only: 422 only.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



The following are the names of the candidates who stood first in first class of the above examinations. Prizes will be awarded to them in due course.

PARICHAYA: No. 11 – S. Raghunathacharya, Ravi Ananthavaram.

ABHIGNA: No. 340 – P. Pundareekaksha Sarma, Nellore.

VICHAKSHANA: No. 403 – C. R. Srinivasan, Mudurai.

## उत्तीर्णाः 407

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः प्र. श्रे | द्वि. श्रे | तृ. श्रे | खण्डशः |
|---|---|---|---|---|---|---|
| 1 परिचयः | 296 | 274 | 62 | 88 | 70 | — |
| 2 अभिज्ञः | 145 | 133 | 13 | 45 | 47 | — |
| 3 विचक्षणः | 86 | 77 | 1 | 36 | 35 | — |
| 4 समर्थः | 14 | 13 | — | 2 | 1 | 5 |
| 5 कोविदः | 4 | 4 | — | 1 | 2 | 1 |
| | 545 | 501 | 74 | 172 | 155 | 6 |

## शुभकृद्दक्षिणायनपरीक्षासु विनियुक्तानि केन्द्राणि 43

### तद्विवरणम्

अनन्तपुरम्, अमलापुरम्, अम्बत्तूरु, आह्लगड्ड, एलूरु, कडप कर्नूलु, काञ्चीपुरम्, कानाल, कूचिपूडि, कोंडबालवारिपालेम्, कोत्तपेट, कोयंबुत्तूरु, गुंटूरु, गान्धिग्राम्. गोविचेट्टिपालेम्, चित्तूरु चिदंबरम्, तंजावूरु, ताम्बरम्, तिरुवल्लिकेणि, तिरुचिरापल्ली, तिन्नवेल्ली, तूत्तुकुडि, नेल्लूरु, पट्टुकोट्टै, पाकाल, पिल्लयारपट्टि, पेद्दापुरम्, बिट्रगुंट, मचिलीपट्टणम्, मद्दिकेर, मदुरै १, मदुरै २, मद्रास (टि. नगर्), मन्नारगुडि, रावि अनन्तवरम्, राजमंड्रि, वरंगल् वेंकट्रायपुरम्, शेलम्, श्रीरङ्गम्, सत्यमङ्गलम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सम्पादकवर्गः

प्रधानसम्पादकः — श्री यं. वरदराजं पंतुलु,
प्रकाशकमन्त्री ।

सहायाः

1. श्री ति. क. तिरुवेङ्कटाचार्यः, प्रधानमन्त्री ।
2. श्री के. श्रीनिवासाचार्यः, परीक्षामन्त्री ।
3. श्री ने. सुब्बरायशास्त्री, प्रचारकमन्त्री ।
4. श्री के. मुनिरेड्डी, कार्यवर्गसभ्यः ।
5. श्री ए. सुब्रह्मण्यशास्त्री, कार्यदर्शी त्रिशिरःपुरीशाखायाः ।
6. श्री टि. महादेवशास्त्री, कार्यदर्शी नागपट्टिनशाखायाः ।
7. श्री जि. रामानुजाचार्यः, कार्यदर्शी मचिलीपट्टणशाखायाः ।
8. श्री ए. राजगोपालन्, कार्यदर्शी मदुरशाखायाः ।
9. श्री च. रंगाचार्यः, कार्यदर्शी हैदराबादशाखायाः ।
10. श्री जि. यस्. श्यामाचार्यः, कार्यदर्शी कोयंबतूरशाखायाः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# शुभकृद्विजयदशमी



चित्तूरुसभाभवने संस्कृतं पठन्तः माणवकाः तेषामुपाध्यायौ च ।

*Published by:* Sri N. Ramanatha Iyer B. A., B. L.,
*Advocate and Secretary, S. B. P. Sabha, Chittoor (A. P.)*
*Printed by:* Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




## त्रैमासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा.

चित्तूर (आं० प्र०)

क्रमाङ्कः १ ] 30 DECEMBER 1962 वार्षिकम् १-५०



शुभकृन्मार्गशीर्षाङ्कः ]  [मूल्यम् ४० पै०।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषयसूची

महतां शुभसन्देशाः



---

सर्वे पत्रादिव्यवहाराः

**प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा,**

**चित्तूरु (आ० प्र०)**

इत्यनेनैव कार्याः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# महतां शुभसन्देशाः

## *Dr. S. Radhakrishnan,*

PRESIDENT, INDIA, NEW DELHI.

I am glad to know that the Samskrita Bhasha Pracharini Sabha, Chittoor, is bringing out a new journal called "Gairvani". I wish the publication success.



## **Sri Swami Sivanada,**

Sivanandanagar, (Himalayas) India.

My silent salutations and adorations to Goddess Saraswathi, the support, source, centre, ideal and goal of all cultures and Bhashas and all beings.

What is culture? That by knowing which, everything else is known, is the true culture. If that is known, all unseen things will be seen, all unheard of things will be heard, all understandable things will be understood. It is the culture of the Spirit or Soul or Atma. That is to be sought for and attained. There is no greater gain than this.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



Our ancient Seers and Sages of Bharatha Varsha have expounded thi highest culture. Their experiences are recorded in the Upanishads. The Upanishads are the beconlights. They are the authority, as they are the result of Aparokshanubhooti. Everyone can get solace from them. All the problems can be solved by attaining this knowledge. The highest good, Sreyas can be achieved. That is the foremost duty of one and all.

It is gratifying to note that the new journal, "Gairvani" is trying to spread this culture. The word, "Gairvani" means "Deva Bhasha" or the language of the gods. The language of the gods will teach only the highest subject. That will teach one what his highest duty is and how to achieve the same. May Mother Saraswathi speak through the pages of the ,'Gairvani." May She bless you all to know Her and become Herself.



## Sri M. Ananthasayanam Ayyangar,

*Governor, Bihar.*

I am glad that you are publishing a journal and that the Sabha is growing in usefulness one in popularity.

Sanskrit has been the cultural language of India and has contributed largely to the unity of the country. The main literature in any language in India is derived

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



from Sanskrit. The North Indian languages are the offspring of Sanskrit and the South Indian languages have drawn greatly their vocabulary from Sanskrit words and expressions. Figures of speech, books on poetry and all arts, sciences and philosophy have all been written in Sanskrit. Sanskrit literature is rich, varied and comprehensive. It deals with all aspects of human life. It is therefore necessary that this language should be spread once again throughout the length and breadth of our land.

Even for a person to become a scholar in ones own language in India he must know Sanskrit well. Sanskrit may be made easy and people must begin to speak at home in Sanskrit A journal of the kind that you propose starting will help the students a great deal.

I wish your enterprise every success.



HIS HOLINESS SRI KANCHI KAMAKOTI PITHADHIPATHI

*Jagadguru Sri Sankaracharyaswamy*

KANCHEEPURAM.

" संस्कृतस्य विरलप्रचारेऽस्मिन् काले तस्य सुलभप्रचारार्थं "गैर्वाणी" नाम्ना त्रैमासिकपत्रिका आरभ्यत इति श्रुत्वा नितरां सन्तुष्टाः स्मः । सर्वेप्यास्तिका एतत्पत्रिकां स्वीकृत्य पत्रिकाया उत्तरोत्तरा-वृद्धये यतन्ताम् । "

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



*Panditaraja, Shastra Ratnakara,*
*Vidya Vachaspati*
ACHARYA T. A. V. DIKSHITAR
*Joint General Secretary:*
Sanskrit Vishva Parishad

Bharatiya Vidya Bhavan,
*BOMBAY - 7*

अलाभि यथासमयं भावत्कं पत्रम् । अवागम्यत च भवदुद्दिष्टं कार्यम् । अन्वभूयत च महानानन्दः ।

अद्यत्वे संस्कृतपत्रिकाणां बह्वीनां तत्र तत्र प्रकाशनं समुपलभ्यते । संस्कृतप्रचाराय बद्धपरिकराणां भवादृशानां पत्रिकाप्रकाशनमपि उद्दिष्टं फलं सर्वथा प्रसोष्यतीति सुदृढोऽस्ति नो विश्वासः ।

प्रार्थये भगवन्तं यथा तदीयया करुणातरङ्गितया दृशा अनुगृहीतो भवदीयः प्रयासः पत्रिकाप्रकाशनरूपः फलेग्रहिर्भूयादिति ।



MINISTER
INFORMATION & BROADCASTING,
NEW DELHI, INDIA.

*My best wishes for your new Journal.*

——:o:——

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

वाणीं भजत गैर्वाणीम् !



# गैर्वाणी

वाणीं भज रे वाणीं
गैर्वाणीं भज रे वाणीम् ।

शुकपिकमधुरनिनादं
वाणीवीणानादं
मोहनमुरलीनादं
विस्मारयतीयं वाणी ॥ वाणीं ॥

व्यासभासवाणीयं
वाल्मीकिमधुरवाणीयं
कविकालिदासवाणीयं
भवभूतिकरुणवाणीयं ॥ वाणीं ॥

पञ्चकाव्यवाणीयं
प्रपञ्चख्यातवाणीयं
वेदवादवाणीयं
वेदन्तसारवाणीयं ॥ वाणीं ॥

आ. वरदराजः.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अञ्जलिः

गुणग्राहिषु दोषनिरासकेषु सहृदयेषु इदं सविनयं निवेद्यते यदियं गैर्वाणी वत्सरात्पूर्वमेव प्रकाशनीयापि आर्थिकदुस्थित्या लेखकानामालस्येन च एतावन्तं कालं व्यलम्बतेति। अपि च सदस्यतामादृतवन्तोपि सन्तः क्षमापणार्हा यतस्ते एतदवधि पत्रिकाप्रकाशनाऽभावमनुमोद्य अस्मासु च विश्वासमशिथिलयित्वा समवर्तन्त।

अद्येदं सप्रश्रयमभिधीयते इतः परं पत्रिकेयं यथाकालं प्रकाशयिष्यते समेषां आदरपात्रं च भविष्यतीति।

लेखकाः संस्कृताभिमानिनश्च सप्रश्रयं प्रार्थ्यन्ते स्वेषां रचनाभिः इमां नित्यं अलङ्कर्तुं एतस्याः सेवां चादर्तुम्। यदि रसिकैर्महाशयैः गैर्वाण्याः अभिवृद्ध्यै सूचनाः क्रियेरन् ताः यथायोग्यं स्वीक्रियेरन्।

सर्वेपि संस्कृतरसिकाः छन्दतो वार्षिकं प्रदाय अस्याः पोषणे सर्वाङ्गसौन्दर्य-सम्पादने च साहाय्यमाचरन्तु।

इति
प्रार्थयिता
**मं. वरदराजं पन्तुलु,**
प्रकाशकमन्त्री.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सभावृत्तम्

न ज्ञायते कस्मिन् क्षणे किं भविष्यति केन वा वस्तुना कीदृशं फलं भविष्यतीति । अल्पीयस्यपि उत्पत्तिस्थले गङ्गा स्वमार्गेणागत्यागत्य पाति प्राणिनः पावयति च । एवमेव अल्पारब्धमपि कार्यं फलति बहुफलानि दैवानुकूल्येन ।

एषा संस्कृतभाषाप्रचारिणी सभा 1945 क्रैस्तवाब्दे सेप्टंबरमासस्य पञ्चमतिथौ बुधवासरे प्रातः सार्धनवघण्टाकाले सम्पादितस्वरूपा आन्ध्रप्रदेशस्थिते एर्पेड्डुनामके कुग्रामे । तदा तत्र कस्यांचन माध्यमिकपाठशालायां उपाध्याय-वृत्तिमवलम्ब्य वर्तमानाः संस्कृतोपाध्यायाः पञ्चषाः समेत्य संस्कृतोन्नत्यै उपाधिवितरणं अत्यधिकतया उपयोक्ष्यतीति निर्धार्य स्वस्मात् अल्पवेतनात् पञ्चाशद्रूप्यकाणि समचिन्वन् । तेनाल्पेनैव धनेन प्रचारादिक्रियाकलापं निर्वहन्तः ते परिचयः, अभिज्ञः, समर्थः, कोविदः इति परीक्षाः तत्तद्योग्यां पाठ्यप्रणालीं च निश्चित्य मुद्राप्य मद्रराष्ट्रे प्राचारयन् । तन्मित्राणि पण्डिताः उत्सुकाः सहृदयाश्च विद्यार्थिनः परीक्षाभ्यः समचोदयन् येन 1946 जनवरिमासे नवतिर्विद्यार्थिनः उपस्थिताः फलितानि च देशभाषापत्रिकासु प्राकाश्यन्त ।

फलितांशदर्शनेन च समुत्साहिताः विद्यार्थिनः पण्डिताश्च उत्तरोत्तरपरीक्षा-सन्नाहमाचरन् नूतनाश्च एतत्परीक्षाक्रमविविदिषया बहुशः पत्रव्यवहारमाचरितु-मारभन्त । तदा सभायां पत्रव्यवहारायापि धनं न पर्याप्तमासीत् । तदा प्रथमे एव पण्डिताः पुनः संगम्य प्रत्येकमष्टरूप्यपरिमितं ऋणं अदुः, परन्तु ते न कदापि तन्नाददुः । सभा च तेनाल्पेनैव धनेन पत्रव्यवहारादिकं निर्वहन्ती पाठ्य-पुस्तकान्यानाय्य अभ्यर्थिभ्यः समर्पयन्ती कमीषनमात्रतृप्ता समजीवत् ।

अभ्यर्थिनश्चाल्पसंख्याकाः तेभ्य आदीयमानं च शुल्कं पादरूप्यकप्रभृति रूप्यकद्वयपर्यन्तमेवासीत् । एतेनैव धनेन पत्रव्यवहारः प्रश्नपत्रमुद्रणं प्रेषणं उपाधिपत्रदानादिकं सर्वमपि कर्तव्यमासीत् । प्रष्टारः शोधयितारश्च निश्शुल्कमेव स्वकर्म निरवहन् प्रथमम् ।

1946 वत्सरे अभ्यर्थिनां संख्या द्विशतीमस्पृशत, तेन सभाया उत्साहोपि व्यवर्धत ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परन्तु अत्रान्तरे कैश्चिदनिवार्यैः कारणैः प्रधानमन्त्री परीक्षामन्त्री च स्वजीविकानिर्वाहार्थं चित्तूरनगरमागच्छताम् । तथापि ते तत्तत्पदवीषु अन्यान् स्वसहचरान्नियोज्यैव पादं प्राचालयन् । तथापि 1947 वत्सरे अभ्यर्थिनां संख्या न्यूनतामभजत, कार्यप्रतिरोधश्च समजनि । ततः पुनः प्राचीनप्रधानमन्त्री एव तत्र गत्वा सामाग्रीं मूलधनं स्वायत्तीकृत्य चित्तूरनगरमानयत् । तदा सामग्री एकस्यां अल्पीयस्यां जातीफलपेटिकायां प्ररोध्या असीत्, धनं च पञ्चाशद्रूप्यकपरिमितम् ।

सा च सभा इत्थं चित्तूरमनुप्राप्ता प्राचीनप्रधानमन्त्रिणः अपवरके कृतस्थितिः अभ्यर्थिनामाह्वानाय प्रचारमपेक्षमाणा प्राचीनपरीक्षामन्त्रिणः सहकारेण पुनः सावलम्बा व्यलसत । नगरे चास्मिन् निश्शुल्कपाठशालानां निर्वाहेण प्रधानमन्त्रिणः कृत्येन अचिरादेव सा प्रजादरपात्रमभवत ।

1948 वत्सरे चेयं सभा रिजस्टरकर्मणा द्रढीकृता आन्ध्रेषु द्रविडेषु च अनुबन्धसंस्थाः परिकल्प्य सर्वाङ्गपूर्णतामापेदे । गुण्टूरनगरे मछलीपट्टने राजमहेन्द्रवरे पोन्नूरे हैदराबादे मद्रनगरे तिरुचिरापल्यां नागपट्टणे च अस्याः अनुबन्धसंस्था अभवन् । परीक्षाकेन्द्राणि च पञ्चाशदधिकानि विविधस्थलेषु समपद्यन्त । परीक्षाणां क्रमोन्नत्यां सङ्कटमुद्भाव्य तृतीया विचक्षणपरीक्षा योजिता । प्रतिवत्सरं दक्षिणायनोत्तरायणपरीक्षयोः सहस्राधिका अभ्यर्थिनः उपातिष्ठन् । एवमेषा सभा दक्षिणापथ एव दिव्यवाणीं दिव्यज्योतिः दीपयति स्म ।

एतस्याः प्रचाररीतिमभिवृद्धिं च समीक्ष्य नागपुरीयैः एतत्सनामा सक्रिया चैका सभाप्यायोजिता अधुनापि विलसति । किं बहुना, प्रभुत्वादरपात्रं संस्कृतविश्वपरिषदपि स्वस्वरूपकल्पने अनल्पमेतत्सभाक्षुण्णमेव मार्गमन्वसरदित्यत्र नातिशयोक्तिः । 1954 वत्सरे गुण्टूरनगरे संस्कृतसम्मेलनं निरवाह्यतानया सभया ।

सभायाः परिपुष्ट्यै बहवः सभ्यतां स्वीचक्रुरन्ये समार्पयन् स्वरचितानि पुस्तकानि अपरे च प्रदानम् ।

एवं दिनक्रमेणाभिवृद्धिं नीता इयं कार्यनिर्वाहाय एकं वैतनिकं लेखकमपोषयत स्वनिवासाय चागृह्णात अपवरकमेकं मासेन । अपर्याप्ते अपवरके स्वकार्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निर्वाहाय 1959 वत्सरे अक्रीणात एकं प्राचीनं भवनं अष्टसहस्रव्ययेन। तत्प्रभृति सभायाः क्रिया विस्तृता अभवत्। एकः वैतनिकः कर्मचारी अयोजितः त्रयः उपाध्यायाश्च प्रवचनकर्मणि नियोजिताः। परश्शतं विद्यार्थिनः संस्कृतपठनाय उत्सुकाः सममिलन्। वाल्मीकि-कालिदास-गीताजयन्त्यादयः उत्सवाश्च निर्वाह्यन्ते काले काले। स्वीयो ग्रन्थालयश्च त्रिसहस्रग्रन्थैः उपेतः भारत्रयसहितः सभायै प्रदत्तो नगरस्थैः वणिक्प्रवरैः।

एवं च भवनपुनर्निर्माणं चावश्यकमिति कार्यनिर्वाहकैर्निश्चितम्। तत्सा-हाय्यविज्ञापनादरवत आन्ध्रप्रभुत्वं पञ्चसहस्रमुद्राः प्रादात्, परं पञ्चसहस्रमुद्राः सम्पाद्य दशसाहस्र्या भवनपुनर्निर्माणाय चादिशत्।

प्रभुत्वाज्ञामनुसृत्यैव निवेशनस्थलस्य पुरोभागे द्विभूमिकं भवनमुदस्थाप्यत।

तत्पृष्ठतः सभाभवनं, तत्परतः स्नानभोजनादिगृहाणि च निर्मातुमभीष्टानि। तदर्थं च प्रयत्न आधीयते।

आन्ध्रप्रदेशप्रभुत्वं भारतप्रभुत्वं च सभां स्वोपकार्यत्वेनाङ्गीचक्रतुः। एतत्स-भायाः अन्तिमा कोविदपरीक्षा च प्रभुत्वादरपात्रतां नेष्यते अल्पेनैव कालेन। प्रभुत्वं च स्वयमङ्गीकृत्य विश्वविद्यालयान् अङ्गीकारयितुं च यतते।

एतदवधि पत्रिकाया अभावः सभामतीव क्लेशयति स्म। इदानीं सोपि लोपो दूरीक्रियते। यदि महतां आदरो भवेत् सर्वाङ्गसम्पूर्णा इयं भारतजातेः भारतीयसंस्कृतेश्च समुत्तेजनेन स्वधर्ममनुवर्तिष्यते।

इति

ति. कं. तिरुवेङ्कटाचार्यः

प्रधानमन्त्री.





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सविनयं निवेदनम्

पण्डितवर्याः,

सुविदितमेव सर्वेषां विद्वद्वरेण्यानां यत् संस्कृतं हि सकलभाषासम्मेलनसीमाभूमिः इति, संस्कृतेन सम्बन्धः न केवलं भारतीयभाषाणामेव अपितु अभारतीयानां भाषाणामपीति च । संस्कृते साम्प्रतमपि सजीवानां विश्वभाषाणां मकुटायमानं वस्तु बहुलं वरीवर्तत इति नात्र सन्देहलेशः ।

तादृशी ज्ञानराशिः वेदेषु, पुराणेषु, इतिहासेषु, शास्त्रेषु, काव्यनाटकादिषु च बहुधा निहितं दरीदृश्यते । अतः अभारतीयानामपि संस्कृतभारती अवश्याध्येतव्या समजनि ।

एतादृश्याः संस्कृतभाषायाः सेवायै इयं सभा षोडशवर्षेभ्यः परीक्षाप्रचालनेन, सरलसंस्कृतग्रन्थप्रकाशनेन, विद्वत्सम्मेलनघटनेन, उपन्यासप्रदानेन, बहुमतिप्रदानेन च अनवरतं यतते ।

अधुना च तादृशसेवासरण्यां इतोधिकप्रयोजनसाधनाय **"गैर्वाणी"** नाम्नीं पत्रिकां निर्वोढुं बद्धपरिकरा इयं भवतां सादरसहकारमभिलषति ।

अतः प्रार्थये कृपया भवन्तः सुलभसंस्कृते, आन्ध्रचां द्राविड्यां वा कथात्मिकां, सम्भाषणात्मिकां, व्यासरूपां वा वचनरचनां विलिख्य प्रेषयेयुरिति ।

इति
भवदीयः
**यं. वरदराज पन्तुलु**
प्रकाशकमन्त्री.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# मातृसान्त्वनम्

अम्ब त्वामविचार्य मूढमनसः कष्टम् ! मृतां मन्वते
निन्दन्त्यप्यधमास्त्वयैव मधुरां वाचं च ये शिक्षिताः ।
दुःशीला भवदीयपुत्रहतका इत्येतदस्वादु यत्
स्वान्तं मे तुदति प्रगाढमखिलव्याहारसञ्जीवनि !

विविधा देशभाषा या एतस्यां भारतावनौ ।
तासां जीवितभूताऽसि निर्जीवा भवती कथम् ?

उच्चावचं द्वन्द्वशतैरभीक्ष्णं
क्लेशैः समाकीर्णपथं कठोरैः ।
जगन्महारण्यमिदं कृतं यैः
स्ववाग्भिरानन्दमयं कवीन्द्रैः ॥

तादृशो भावितात्मानः कवयस्त्वन्मुखेन हि ।
मुहुरास्वादयन्त्यस्मान् नवान् भावसुधारसान् ॥

ते सर्वे भवतीमेव बहुमानपुरःसरम् ।
बहुधाऽराधयाञ्चक्रुः पुनन्तो रसनाः स्वकाः ॥

परमममृततत्त्वं दर्शयित्वाऽद्वितीयं
जननमरणदुःखव्याकुलेभ्यो नरेभ्यः ।
ददति निगमवाचो याः स्थितिं मृत्युदूरां
जनिरसि किल तासां तत्कथं स्यान्मृतिस्ते ॥

अद्यापि शृणुमो देवि देवर्षीन् विदितात्मनः ।
त्वन्मुखेनैव वदतो दिव्यौपनिषदं वचः ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनुत्तमा संस्कृतिरस्मदीया त्वय्येव भद्रं निहिता पुराणी ।
गीतास्यतः संस्कृतभारतीति निःशेषवाक्संस्करणाच्च हेतोः ॥

महिमानमनादृत्य तव जल्पन्ति केचन ।
दुर्मेधसो मृतेति त्वाममृतां मृतजीवनीम् ॥

आसीत्पुरा नूनमनूनलक्ष्मीः
तवाम्ब साऽद्यापि न नष्टभूमा ।
अहीनभूत्यै सुपरिश्रमान्नः
कल्याणमस्यै भवताद्भवित्र्यै ॥

इति
**वि. आंजनेयशर्मा,**
यं. ए. शिरोमणिः.



# आचार्यमहिमा

विदितमेवैतत् सर्वेषां यत् लोके सुखमेव सर्वैः प्रार्थ्यते इति । तादृशं सुखं कथं वा लभ्येत इति विचारः न केनापि क्रियते । दैवकृपां विना कदापि सुखं न भवेत् । दैवं तावत् सर्वदा तिरोहितं एव अनुगृह्णाति न तु प्रत्यक्षम् । "माता पिता गुरुर्दैवं" इति त्रेधा दैवं अनुगृह्णाति । माता प्रसूते पुत्रं, पिता तं पोषयति, गुरुस्तावत् ज्ञानप्रदानेन पुनर्जन्म ददाति । गुरुरेव अज्ञानं निवर्तयति । गुरुशब्दनिर्वचनमेव तद्दर्शयति ।

गुकारस्त्वन्धकारः स्यात् रुकारस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते इति ॥

गुरोः आचार्यइत्यपरं नाम ।

"आचिनोति हि शास्त्रार्थं आचारे स्थापयत्यपि ।
स्वयं च कुरुते यस्मात् आचार्यस्त्वभिधीयते" ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरुस्तावत् ईश्वरांश एव नात्र संशयलेशोऽपि । ईश्वरापराधः कदाचित् निवर्त्यः भवेत न तु गुर्वपराधः । अत एव

"शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
शिव एव गुरुस्साक्षात् गुरुरेव शिवस्स्वयम्" इति वदन्ति ।

त्रिशङ्कुः इति कश्चित् राजा सशरीरं स्वर्गं जिगमिषन् स्वकुलगुरुं वसिष्ठं पृष्ट्वा तेन प्रथमं निराकृतः अनन्तरं तत्पुत्रैश्च निराकृतः शापितः च । सः चण्डालतां गतः तपस्यन्तं विश्वामित्रं स्वमनोरथं पूरयितुं प्रार्थयामास । तदर्थं सः मुनिः कमपि यागं आरभत । तदानीं आहूताः देवाः हविर्भागादानाय नागताः । तेन क्रुद्धः स विश्वामित्रः स्वतपोबलेन त्रिशङ्कुं स्वर्गं प्रापयत् । इन्द्रः गुरुशापहतं तं अधः पातयामास । तदानीं "त्रायस्व त्रायस्व" इति उच्चैः त्रिशङ्कुः चुक्रोश ।

"तत्रैव तिष्ठ" इति उक्त्वा स्वर्गान्तरसिसृक्षया नक्षत्रगणान् देवांश्च प्रथमं स्रष्टुं आरभत मुनिः । तेन भीताः देवाः सर्षिसङ्घा ब्रह्मणा साकं आगत्य हेतपोधन, गुरुशापहतः अयं स्वर्गं आरोढुं नार्हति । अतः अत्रस्थ एवायं स्वर्गसुखं लभताम् इति ऊचुः । विश्वामित्रस्तथेत्यङ्गीचकार ।

"अयं राजा महाभाग गुरुशापपरिक्षतः ।
सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥ इति रामायणे ।

एवमेव कर्णः आत्मानं भार्गवं ब्राह्मणं ब्रुवन् शुश्रूषमाणः परशुरामात् ब्रह्मास्त्रं लेभे । कदाचित् कर्णस्य उत्सङ्गे शिरो निधाय स्वपन् आसीत् गुरुः परशुरामः । तदानीं कश्चित् द्रोणकीटः तस्य उत्सङ्गं दष्टवान् । तस्मात् रुधिर-प्रवाहः समभवत् । कर्णः गुरोः निद्राभङ्गभयात् वेदनां सर्वां असहत । प्रबुद्धः सः



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परशुरामः रुधिरस्रवयुक्तं तं कर्णं कीटं च दृष्ट्वा तं तस्य जातिं पप्रच्छ "न त्वं ब्राह्मणः, अधृष्टा हि सा जातिः" इति। भीतः सः कर्णः स्वस्य जातेः तिरोधानेन विद्याभ्यासं च ऊचे।

अनन्तरं परशुरामः "यस्मात् त्वं तिरोधानेन मत्सकाशात् विद्याभ्यासं कृतवानसि तस्मात् मत्तः अभ्यस्ता सा विद्या आवश्यकसमये विस्मृता भवतु इति" शशाप। तेनैव कारणेन कर्णः अन्तकाले ब्रह्मास्त्रप्रयोगं अजानानः ममार। श्रीमद्रामचन्द्रोऽपि ताटकावधसमये स्त्रीवधं प्रति शङ्कितोऽपि गुरोः विश्वामित्रस्य वचनेनैव तां अवधीत्, न तु स्वच्छन्दम्। गुर्वनुग्रहं विना विद्याप्राप्तिः श्रेयश्च कदापि न भवेत्। विद्यासाधनानि त्रीण्येव। अत एवाहुः —

"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थो नोपलभ्यते"॥ इति।

गुरुशुश्रूषैव विद्याभ्यासे श्रेष्ठतमं साधनं भवति। पूर्वं आपोदस्य धौम्यस्य सकाशे बहवः शिष्याः विद्याभ्यासं अकुर्वन्। तदानीं उपमन्युः नाम शिष्यः विद्याभ्यासाय तं उपागच्छत्। सः गुरुः प्रथमं तं गाः चारयितुं आदिदेश। सः गाश्चारयित्वा गुरुकुलमागम्य गुरुं प्रणनाम। तं पीवानं दृष्ट्वा गुरुः "केन वृत्तिं कल्पयसि?" इति पप्रच्छ। भैक्षेण वृत्तिं कल्पयामि इत्युक्तवति तस्मिन्, गुरवे अनिवेद्य भैक्षं नोपयोक्तव्यं इत्युवाच गुरुः। सः भैक्षं चरित्वा गुरवे न्यवेदयत्। स गुरुः तत्सर्वं भैक्षं अगृह्णात्। उपमन्युः परेद्युः प्रथमं भैक्षं गुरवे दत्वा द्वितीयं भैक्षं स्वयमभक्षयत्। एतत् ज्ञात्वा गुरुः द्वितीयं भैक्षचरणं न्यषेधत्। सः क्रमशः गवां पयः अनन्तरं फेनं च उपयुञ्जानः गाः अचारयत्। तत्सर्वं अपि गुरुणा प्रतिहतं बभूव। तथाऽपि स उपमन्युः गाः चारयन् बुभुक्षया पीडितः अर्कपत्राणि अभक्षयत्। तेन सः अन्धः बभूव। अन्धोऽपि चङ्क्रम्यमाणः सः कूपे पपात। तं अन्विष्यन् आगतः गुरुः कूपे पतितं "अश्विनौ स्तुहि" इत्युक्त्वा गतः। तेन उपमन्युना स्तुतौ तुष्टौ च अश्विनौ आगत्य कमपि अपूपं प्रदर्श्य खादितुं आदि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिशतुः । सः गुरवेऽनिवेद्य न भक्षयामीत्युवाच । "आवाभ्यां दत्तः अपूपः तव गुरुणाऽपि खादितः । त्वमपि तथैव कुरुष्व" इत्युक्तोऽपि स नानुमेने । तस्य गुरुभक्त्या तुष्टौ तौ तं चक्षुष्मन्तं हिरण्मयदन्तं च अनुगृह्य "सर्वाणि धर्मशास्त्राणि सर्वे वेदाश्च ते प्रतिभास्यन्ति" इत्युक्त्वा जग्मतुः ।

गुरुः एतत सर्वं विज्ञाय "यथा आश्विनावाहतुः तथैवास्तु" इति अनुजग्राह । अहो ! पश्यत आचार्यमहिमानम् । अतः सर्वैरपि गुरुभक्तिपरैः भाव्यम् । इतिशम् ।

टि. महादेवशास्त्री,
शिरोमणिः



कथानिका

## चोरवञ्चनम्

अन्ध्रकर्णाटकसार्वभौमस्य कृष्णदेवरायस्य आस्थान्यां कविः तेन्नालिराम इति कश्चिदासीत् । स परिहासशीलः धीमान् युक्तिमान् च आसीत ।

एकदा राजाश्रयेण धनशालिनः तस्य गृहे चौर्यं कर्तुं धनं च अपहर्तुं चत्वारः चोरप्रवरा आगच्छत् । तेषु च कुड्यपार्श्वे निलीय गृहान्तर्व्यवहारं अवधानेन परिशीलयत्सु तेन्नालिरामः तद्भावमाकलितवान् । स एतदजानन् इव स्वजायामेवमाह-अयि, अधुना अस्मिन्नगरे चोरव्यथा अतीव भवतीति श्रूयते । अस्मद्गृहे च प्रभुदत्तं महार्घं सुवर्णरत्नादिकं बहु वर्तते । एतच्च सर्वैरपि ज्ञायते च । तत्कथं तद्रक्षणीयमस्माभिः ? इति । सा च प्रत्युत्तरमदात्-नाथ, दृढतमायां पेठिकायां निक्षिप्य बलीयस्या मुद्रया मुद्रयावः । तथा चेत् तच्चोराणां असाध्यं भवेत् इति । तच्छ्रुत्वा सोवदत् — मुग्धे, चोराणां पेटिका मुद्राश्च निरोधका न भवन्ति । ते तां अपि पाटयेयुः, अथवा पेटिकामेव

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नयेयुः । तस्मात् मयैका युक्तिरालोचिता । रत्नादिकं पेटिकासु निधाय उद्यान-कूपे पातयेव । तेन आवां निश्चिन्तं स्वपिष्यावः, ते च निराशाः निवर्तिष्यन्ते इति । एतत्सम्भाषणं सर्वमपि चोराः गूढाः अशृण्वन् अहृष्यन् च ।

अनन्तरं प्रियायै सूचितरहस्यः तेन्नालिरामः घरट्टोलूखलादिकं शिलाजातं पेटिकायां निक्षिप्य मुद्रयित्वा भार्यासहायः कूपसमीपमानाय्य तद्भारं तत्र निक्षिप्तवान् गृहान्तः अगच्छत् च । तत्पतनध्वनिमाकलय्य चोराः तत्र आगताः घटीयन्त्रमाकृष्य जलमुद्धर्तुं प्रारभन्त । तेन्नालिरामश्च निभृतमागत्य तैरुद्धृतं जलं कदलीवाटिकायै प्रासारयन् आलवालानि आपूरयति स्म ।

जलसमृद्धः स कूपः निरन्तरोद्धृतजलोपि न तलमदर्शयत् । ते च चोराः द्रुतं जलमवसादयितुं पेटिकां च आहर्तुं महावेगेन घटीयन्त्रं मग्नोन्मग्नं अकुर्वन् । यदा चारुणोदयोऽभवत् । मनुष्याश्च इतस्ततः सञ्चरन्ति स्म तदा धृष्टः तेन्नालिरामः उच्चैराक्रोशत् — भोश्चोराः, अलमलमायासेन । अस्मत्कदली-वाटिका जलपूर्णा । इतः न जलमावश्यकम् । तद्विरमत जलोद्धरणं इति । तच्छ्रुत्वा भीता लज्जिताश्च ते चोरा प्रपलायिताः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ग्रन्थस्वीकृतिः

## १. आत्रेयश्रोत्रानन्दः

मूल्यम् ५० पैसाः

स्तुतिरूपमेतत्पुस्तकं मछलीपत्तननिवासिना दत्तात्रेयोपासकेन श्रीमता नादेल्ल-वंशजेन दक्षिणामूर्तिना विरचितम् । अष्टोत्तरशतश्लोकरूपमेतत् स्तोत्रं रचयितुः दत्तानुग्रहजां कविताधारां प्रकटयत् श्रोतॄणां सत्यमेव आनन्दमाविर्भावयति । अत्र प्रधानतया बह्व्यः दत्तलीला वर्णिताः । बहुलतया दत्तात्रेयावतारस्य नरहरि-योगिनः प्रभावोऽत्र निरूपितः । दत्तात्रेयकटाक्षमपेक्षमाणानां पारायणार्होऽयं ग्रन्थः ।

एकमुदाहरणं —

कृष्णातीरे चरन्तं नृहरिगुरुवरं प्रेरितः प्राप्य काल्या<br>
धीमन्दः छिन्नजिह्वो घनविबुधनुतो निन्दितो मन्दमत्या ।<br>
यत्पादाम्भोजभृङ्गोऽभवदुदितकृपापूर्णचित्ताच्च दत्तात्<br>
हस्ते न्यस्ते तु मस्ते प्रविदितनिगमो मां तथा कर्तुमीडे ॥

प्राप्तिस्थानम् — नादेल्ल दक्षिणामूर्तिः, मसुलीपेटम्, कृष्णामण्डलम्, आन्ध्रप्रदेशः ।





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# २. न्यायलघुव्याकरणम्

मूल्यम् रु. ३—००

इदं पुस्तकं जाफ्नानगरनिवासिना **श्रीमता सुब्रह्मण्यशास्त्रिणा** शिरोमणिना लिखितं प्रकाशितञ्च । इदं संस्कृतव्याकरणं सिंहलदेशे पट्टपरीक्षार्थिनो विद्यार्थिनः मनसि निधाय भाण्डार्करप्रभृतिभिः क्षुण्णेन मार्गेण द्रविडांग्लविवरणाभ्यां सह समायोजितम् । संस्कृताभ्यासकांक्षिणां एतत्पुस्तकमतीवोपकरीति

इदं, भारतदेशे संस्कृतभाषाप्रचारिणी सभा चित्तूरु (A. P.) इत्यत्र, सिंहले **के. सुब्रह्मण्यशास्त्री,** ९३ हेरम्बभवन्, टेम्पुल् रोड्, जाफ्ना, सिलोन् इत्यत्र च लभ्यते ।



# ३. न्यायलघुव्याकरणाभ्यासपुस्तकम्

(WORK BOOK)

मूल्यम् रु. ६—००

इदमपि पूर्वोक्तव्याकरणकर्त्रैव रचितम् । स्वव्याकरणपाठक्रमेण अभ्यासरीतिरत्र निरूपिता । अत्रत्यानां सर्वेषां अभ्यासानां लेखनेन माणवकः संस्कृतवाक्यनिर्माणे पटुर्भवेत् । अस्यापि प्राप्तिस्थानं पूर्ववदेव ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# ४. पेन्निधि

मूल्यम् रु. १—००

अत्र रामायणे विद्यमानानां व्यक्तीनां परिसराणां च साम्यवैषम्यरूपः तुलनात्मको विमर्शः आन्ध्रभाषया निष्पक्षपातदृष्ट्या निर्व्यूढः । पाठकानां प्रोत्साहमादधती, रचयितुः आ. वरदराजस्य शैली निरनुरोधा प्रसरन्ती आनन्दयति चेतः ।

प्राप्तस्थानम् —

आ. वरदराजन्,
हिन्दी पण्डिट्, पीलेरु.



# ५. आशलु–आशयालु

मूल्यम् रु. १—००

एतदपि पुस्तकं श्रीमता **आ. वरदराजपण्डितेनैव** रचितम् । अत्र भिन्नभिन्नासु अवस्थासु मनुजस्य भावाः यथा विपरिणमन्ति, यथा च आशयानां आशयनां च सङ्घर्षो भवति इत्यादिकं बहुललितया युक्तियुक्तया आन्ध्रभाषया निरूपितम् ।

प्राप्तस्थानम् —

आ. वरदराजन्,
हिन्दी पण्डिट्, पीलेरु.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





श्री सि. यस्. राजारां राजेन्द्रनाथः M. A.,

गोबिचेट्टिपालयम्

जन्मवर्षः १९०१.

१९५३ वर्षे संस्कृतव्यासङ्गप्रारम्भः

परिचयाऽभिज्ञविचक्षणसमर्थपरीक्षाः उत्तीर्य अद्य यावत्
धर्मशास्त्रकोविदः, ज्यौतिषकोविदः,
वेदान्तकोविदः, आयुर्वेदकोविदः, पुराणकोविदः,
मीमांसाकोविदः, न्यायकोविदः अभूत ।
शुभकृद्दक्षिणायनपरीक्षासु अलङ्कारकोविदः अभूत ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सुभाषितानि

( श्रीमता ना. रामनाथार्येण सङ्कलितानि )

The Sanskrit literature abounds in didactic verses. It is proposed to give hereunder and in the further issues of this journal a few of the wellknown and oftquoted verses with a free English rendering for being memorised by students of Sanskrit.

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ १ ॥

Great deeds are accomplished by self effort but not by (idle) wishes; the animals do not enter the mouth of a sleeping lion.

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ २ ॥

Our lives are not eternal; our prosperity is not permanent; death is always very near; therefore one must garner virtuous deeds.

चिन्तनीया हि विपदां आदावेव प्रतिक्रियाः ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ ३ ॥

One should think out remedies near by for any mishap; it is not wise to dig a well (to quench the fire) when the house is on fire.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुंबकम् ॥ ४ ॥

Considerations such as he is my relative, he is a stranger, belongs to a low-minded person; but the nobleminded regard the whole world as their family.

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्र विप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बांधवः ॥ ५ ॥

He is a kinsman who is attached to one in joy and in sorrow; when the country is famine stricken or is overthrown, at the royal gate or in the burial ground.

नाऽकाले म्रियते जन्तुः विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ६ ॥

Although pierced by hundreds of arrows no creature will die till the appointed hour has arrived; but when the time has arrived, even at the touch of (pierced by) a Kusa grass, it will not live.

को विदेशः सविद्यानां कः परः प्रियवादिनाम् ।
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ॥ ७ ॥

What is a foreign land to the learned; who is a stranger to persons who talk pleasingly; what is burdensome to the industrious; what is distant to the enterprising.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अल्पानामपि वस्तूनां संहितिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैः बध्यन्ते मत्तदन्तिनः ॥ ८ ॥

Objects are accomplished by the union of even small things; infuriated elephants are tied down by means of grass twisted into ropes,

निर्गुणेष्वपि सत्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चंद्रश्चांडालवेश्मनः ॥ ९ ॥

Nobleminded persons show compassin even towards creatures devoid of any merit; the moon does not withhold her light from the residence of a low born person.

शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः ।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ १० ॥

Purity, generosity, courage, equanimity in pleasure and pain, politeness, and affection and truthfulness are the qualities of a true friend.

अजरामरवत्प्राज्ञः विद्यामर्थं च चिंतयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ११ ॥

A wise man should contemplate over acquisition of learning and wealth as though he were always young and immortal; he should practise Dharma as though he were caught hold of by the hair (forelock) by Death.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥ १२ ॥

The four fold benefits viz longevity, learning, fame and strength accrue to a persone who is prone to prostrate before elders and constantly serve them.

अर्थानामार्जने दुःखं आर्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ १३ ॥

Fie on riches which are difficult to acquire, difficult to preserve, difficult to earn or spend.

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रंथकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ १४ ॥

I shall summarise in half a verse the teachings contained in the vast literature; it is meretorious to help and sinful to harm, others.

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १५ ॥

What is the use of learning to a person who is not possessed of intelligence; what is the use of a mirror to one who is blind of both eyes.

[ सशेषम् ]



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




जे. कल्याणी
**ताम्बरम्**
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णा
शार्वरिदक्षिणायनपरीक्षासु ।



यस्. जया
**मैलापूरु**
विचक्षणपरीक्षायां सर्वप्रथमतया उत्तीर्णा
शार्वरिदक्षिणायनपरीक्षासु ।



यन्. रामचन्द्रन्
**मन्नारगुड़ि**
परिचयपरीक्षायां सर्वप्रथमतया उत्तीर्णः
शार्वरिदक्षिणायनपरीक्षासु ।



कटुकोञ्वलराजः
**कोत्तगूडेम्**
परिचयपरीक्षायां सर्वप्रथमतया उत्तीर्णः
शार्वर्युत्तरायणपरीक्षासु ।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





आर्. वत्सला
वड्डूरु
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णा
शार्ङ्युत्तरायणपरीक्षासु ।



यस्. विजयलक्ष्मी
मन्नारुगुडि
विचक्षणपरीक्षायां सर्वप्रथमतया उत्तीर्णा
प्लवोत्तरायणपरीक्षासु ।



जि. वेंकटरत्नम्
अनन्तपुरम्
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णः
प्लवोत्तरायणपरीक्षासु ।



हेच्. वेणुगोपाल्राव्
आदोनि
परिचयपरीक्षायां सर्वप्रथमतया उत्तीर्णः
प्लवोत्तरायणपरीक्षासु ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सभायाः शाखाः

## १. हैदराबाद (आ० प्र०)

अध्यक्षः — श्री यन्. नरसिंह अय्यंगार्, अड्वोकेट्
उपाध्यक्षौ — श्री बी. वि. सुब्बरायुडु, अड्वोकेट्
श्री ई. वि. वि, राघवाचार्यः यं. ए.
कार्यदर्शी — श्री चलंचर्ल रंगाचार्यः, शिरोमणिः

**कार्यस्थानम्**

श्रीनिवासविलासः, 1-9-625/8 विद्यानगर्
हैदराबाद् - 7.

## २. मद्रास्

अध्यक्षः — श्री सुन्दरकृष्णमाचार्यः, प्रिन्सिपाल् हिन्दीविद्यापीठः
कार्यदर्शी — श्री के. यस्. राघवाचार्यः, शिरोमणिः.
कार्यस्थानम् — भारतीयविद्यामन्दिर, 89 V. M. Street,
मैलापूर्, मद्रास् - 4.

## ३. गुंटूरु

अध्यक्षः — श्री रा. लिंगनसोमयाजुलु, न्यायवादी
कार्यदर्शी — श्री ने. सुब्बरायशास्त्री, विद्वान्, विद्याप्रवीणः
कार्यस्थानम् — B1/82, पट्टाभिपुरं, गुंटूरु

## ४. नागपट्टिनम्

अध्यक्षः — श्री यस्. नारायणस्वामि अय्यर् B A., L. T.,
कार्यदर्शी — श्री टि. महादेवशास्त्री, शिरोमणिः
कार्यस्थानम् — नेषनल हैस्कूल्, नागपट्टिनम्.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ५. मचिलीपट्टणम्

अध्यक्षः — श्री वल्लभज्योस्युल आनन्दकृष्णाराव् य. ए. अड्वोकेट्.
कार्यदर्शी — श्री गु. रामानुजाचार्यः, विद्वान् मीमांसाव्याकरण-
शिरोमणिः.
कार्यस्थानम् — राजुपेट, मचलीपट्टणम् (आ. प्र.)

## ६. तिरुच्चिरापल्ली

अध्यक्षः — श्री पण्डित मल्लाजी रत्नशर्मा.
कार्यदर्शी — श्री ए. सुब्रह्मण्यशास्त्री, यं ए.
कार्यस्थानम् — 11, ब्रिटोस् कालनी, वेस्ट्वेलिवर्ड रोड्,
तिरुचिरापल्ली.

## ७. कूचिपूडि

अध्यक्षः — श्री पी. बी. वि. प्रसाद राव्
B. A. (Hn); B. Ed.,
कार्यदर्शी — श्री पी. यल्. नारायणशास्त्री.
कार्यस्थानम् — श्री कोंगटिवारि हैस्कूल्, कूचिपूडि,
गुंटूरु मण्डलम्.

## ८. मदुरै

गौरवाध्यक्षः — श्री T. S. कृष्ण
T. V. S. Managing Director.
अध्यक्षः — श्री श्रीकण्ठशास्त्री, M. A.,
Principal, R. D. S. Collage.
कार्यदर्शी — श्री D. राजगोपालन्, पण्डिट्
कार्यस्थानम् — सेतुपति हैस्कूल्, मदुरै.

## ९. कोयंबत्तूरु

अध्यक्षः — श्री सुब्बुरत्नं अय्यर, अड्वोकेट्.
कार्यदर्शी — श्री जी. यस्. श्यामाचार्यः, व्याकरणशिरोमणिः.
कार्यस्थानम् — 162, तेलुगुब्राह्मणवीथी कोयंबत्तूरु 1.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# चीनामुष्करास्तिरस्क्रियन्ताम् !

"अज्ञातः"

गृहे गृहे प्रवर्त्यतां प्रयाणमङ्गलं जनैः
निवर्त्यतामधैर्यमग्रगामिभिश्च भूयताम् ।
निशातनूतनायुधैर्विबुध्यतां प्रयुध्यतां
निरुध्यतां प्रखण्ड्यतां जनस्य चीनको भृशम् ॥

विहायसाऽऽशुयानकैर्महीयसा बलेन च
प्रभूतटांकवाहनैर्दृढं परीवृतानमून् ।
घनस्फुलिङ्गवर्षिभिर्धनैश्शतघ्निभिर्झटि—
त्यभिद्रतान् दहन्तु तूर्णमाततायिचीनकान् ॥

अरे शूरवीरा महासत्त्वसारा
भगो भारतीया स्समाधान धीराः ।
धराक्रामकान् धर्मविध्वंसमूलान्
खलान् चीनकान् मारयन्त्वात्मगुप्त्यै ॥

शूलिशूलशिखराग्रकर्कशा—
न्यच्युतायुधसदक्षकाण्यपि ।
वज्रघर्घररवाणि चायुधा—
न्यद्य पातयत चीनमूर्धसु ॥





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# जागृत !

## ति. कं. तिरुवेङ्कटाचार्यः

जागृत भारतवीराः ! परि–
हरत जनन्याः कष्टं रे ॥ जागृत ॥

धरत करे करवालं, दृढ–
कवचितदेहाः प्रयात रे ।
विशत हिमाद्रेः प्रस्थान्, नलि–
काग्निन् बर्षत शत्रुषु रे ॥ जागृत ॥

चीनामुष्करहतकान्, परि–
हीनान् कुरुतात्यन्तं रे ।
हिमवत्कुहरेष्वनिशं प्रति–
नादयतात्मस्फोटान् रे ॥ जागृत ॥

प्रतिपदखण्डितचीनान् परि–
धावयतात्मस्थानं रे ।
लंघयताद्रेशिशखरा–
ण्याक्रमत त्रिविष्टपपृथ्वीं रे ॥ जागृत ॥

अम्मेरिकांग्लसहाया रे
विचरत स्वैरं युद्धे रे ।
निष्कंटलितां रचयत रे
भारतभूमिं शूरा हे ॥ जागृत ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# शुभकृद्वत्सरीयाः

## उत्तरायणपरीक्षाः



एतद्वत्सरीया उत्तरायणपरीक्षाः 1963 मार्चमासे 2, 3, 4 तिथिषु-प्रचलिष्यन्ति । तदर्थं सशुल्कमावेदनपत्राणि जनवरि 20 तिथेः पूर्वं प्रेषणीयानि । विलम्बशुल्केन साकं जनवरिमासान्तपर्यन्तं तानि स्वीक्रियेरन् ।

| | | | |
|---|---|---|---|
| १. | परिचयपरीक्षाशुल्कम् | रु० | १—५० |
| २. | अभिज्ञपरीक्षाशुल्कम् | ,, | ३—०० |
| ३. | विचक्षणपरीक्षाशुल्कम् | ,, | ४—०० |
| ४. | समर्थपरीक्षाशुल्कम् | ,, | ६—०० |
| ५. | कोविदपरीक्षाशुल्कम् | ,, | १०—०० |
| | समर्थपरिक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | कोविदपरीक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | विलम्बशुल्कम् | ,, | ०—५० |
| | विशेषानुमतिशुल्कम् | ,, | १—०० |
| | केन्द्रपरिवर्तनशुल्कम् | ,, | ०—५० |

आवेदनपत्रादिकं विना मूल्यं सभायां लभ्येत ।

परीक्षामन्त्री.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# प्रार्थना

## अयि भोस्सहृदयप्रवराः !

आनयत गैर्वाणीम्
अनुमोदध्वमस्मत्सेवाम्
आपिबत सारस्वतरसम्
अलङ्कुरुत भवद्रचनाभिरेनाम्
अभिवर्धयत समायाः कार्यक्षेत्रम्
अनुभावयत बालान् शुभोदर्कम्
अनुशीलयताऽस्मत्संस्कृतिं महतीम्
अवत भारतभारतीं इमां गैर्वाणीम्

### गैर्वाण्याः पुरस्कारः

| | | | |
|---|---|---|---|
| महाराजपोषकः | रु. | 116 | प्रदाता |
| राजपोषकः | ,, | 60 | ,, |
| पोषकः | ,, | 30 | ,, |
| अभिमानी | ,, | 10 | ,, |
| सदस्यः | ,, | 1–50 | ,, |

प्रार्थयिता

ति. कं. तिरुवेङ्कटाचार्यः



पि. पुण्डरीकाक्षशर्मा
मुत्तुकूरु
अभिज्ञपरीक्षायां सर्वप्रथमतया उत्तीर्णः
शुभकृद्दक्षिणायनपरीक्षासु ।



श्री. भा. रघुनाथाचार्यः
मचिलीपट्टणम्
परिचयपरीक्षायां सर्वप्रथमतया
उत्तीर्णः शुभकृद्दक्षिणायनपरीक्षासु ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskrita Bhasha Pracharini Sabha, Chittoor.

## शार्वरि उत्तरायण परीक्षा फलितांशाः

## RESULTS OF MARCH EXAMINATIONS 1961.

The following are the Registered Numbers of successful candidates who appeared for the Sanskrit Examinations held on 4th and 5th March 1961 by the Samskrita Bhasha Pracharini Sabha, Chittoor.

### परिचयः PARICHAYA

प्रथमश्रेणी I Class: 742 744 747 759 761
766 800 801 806 819 830 831 832 833
848 853 861 862 864 865 880 890 897
900 902 903 904 906 914 936 937 944
948 949 951 952 988 989 993 1005 1007
1009 1010 1011 1012 1013 1014 1015 1024 1027
1054 1058 1059 1961 1066 1070 1128 1131 1132
1135 1172 1182 1183 1184 1186 1187 1188 1189
1190 1194 1195 1196 1197 1201 1206 1207 1212
1214 1215 1217 1221 1222 1223 1224 1225 1227
1229 1231 1233 1234 1237 1239 1240 1252 1253
1255 1257 1258 1260 1261 1263 1264 1265 1278
1279 1280 1281 1283 1298 1300 1320 1326 1332
1333 1334 1338 1340 1373 1374 1375 137[illegible] 1377
1378 1379 1381 1383 1384 1386 1387 1388 1389
1390 1393 1395 1399 1404 1408 1409 1410 1415
1431 1432 1437 1438 1439 1444 1451 1467 1469

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



1478 1481 1491 1492 1493 1494 1502 1503 1504 1505 1506 1507 1508 1509 1515 1517 1524 1526 1542 1547 1548 1549 1550 1551 and 1554.

द्वितीयश्रेणी II Class: 741 743 752 757 758 764 767 768 790 802 807 808 818 820 823 835 844 846 849 850 851 852 854 856 857 859 882 883 889 910 911 915 916 926 934 938 939 941 942 943 950 954 991 992 1004 1016 1018 1019 1025 1028 1037 1047 1048 1051 1053 1056 1067 1137 1167 1169 1173 1174 1175 1179 1180 1185 1192 1199 1202 1203 1204 1205 1208 1209 1210 1211 1216 1218 1228 1230 1232 1238 1259 2262 1266 1274 1296 1297 1299 1308 1322 1324 1328 1331 1343 1360 1363 1365 1372 1382 1391 1392 1394 1396 1405 1428 1430 1433 1440 1445 1462 1471 1473 1474 1475 1476 1479 1482 1510 1520 1521 1527 1528 1530 1531 1533 1536 1537 1540 1541 1544 1545 and 1558.

तृतीयश्रेणी III Class: 745 746 753 755 756 763 777 778 785 788 793 796 810 821 822 834 836 855 858 860 863 873 876 877 881 884 885 886 887 888 893 894 899 907 908 909 917 924 927 933 935 946 853 855 956 957 958 990 994 1002 1003 1006 1017 1020 1022 1023 1029 1032 1035 1039

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



1044 1045 1049 1050 1055 1060 1062 1063
1065 1068 1071 1168 1235 1275 1276 1277
1287 1289 1292 1293 1294 1295 1305 1307
1318 1319 1321 1323 1325 1327 1329 1330
1335 1337 1339 1342 1344 1347 1348 1350
1351 1352 1353 1354 1355 1356 1357 1366
1367 1380 1385 1397 1411 1412 1414 1416
1443 1446 1449 1450 1452 1472 1477 1480
1483 1486 1488 1522 1523 1425 1429 1432
1434 1435 1438 1439 1443 1446 and 1452.

## अभिज्ञः ABIGNA

प्रथमश्रेणी I Class: 827 837 965 966
998 1075 1077 1088 1089 1109 1138 1139
1145 1146 1147 1148 1152 1191 1193 1244
1268 1271 1398 1401 1453 1458 1459 1495
1497 1498 1499 1500 and 1511.

द्वितीयश्रेणी II Class: 769 770 772 774
797 798 813 828 838 841 842 843
921 923 960 962 963 967 970 971
986 997 999 1001 1072 1079 1090 1091
1100 1105 1106 1107 1108 1111 1140 1143
1154 1158 1166 1219 1220 1242 1248 1249
1250 1267 1269 1270 1273 1284 1285 1286
1291 1303 1309 1370 1400 1407 1421 1424
1457 1489 1496 1512 1513 and 1514.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीयश्रेणी III Class: 773 775 780 781
783 799 812 814 826 839 840 874
920 922 928 945 964 969 1000 1073
1074 1076 1078 1080 1082 1083 1085 1086
1092 1093 1095 1096 1097 1099 1103 1104
1110 1112 1114 1115 1116 1117 1118 1119
1120 1121 1122 1142 1144 1149 1155 1157
1159 1243 1247 1272 1302 1304 1310 1311
1369 1406 1417 1420 1423 1425 1454 1455
1484 1485 and 1490.

## विचक्षणः VICHAKSHANA

प्र. श्रे. I Class: 748 and 1161.

द्वि. श्रे. II Class: 749 750 875 930
972 973 977 1126 1162 1163 1316 1402
1403 and 1501.

तृ. श्रे. III Clas: 829 929 975 976
981 984 1125 1314 1315 1317 1460 1461
and 1466.

## समर्थः SAMARTHA

प्र. श्रे. I Class: 985 Only.

द्वि. श्रे. II Class: 867 and 1427.

तृ. श्रे. III Class: 776 816 817 and 931.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## कोविद: KOVIDA

प्र. श्रे. I Class: Nil.

द्वि. श्रे. II Class: Nil.

तृ. श्रे. III Class: 987 Only.

The foollowing are the names of the candidates who stood first in first class of the above examinations. Prizes will be awarded to them in due course.

PARICHAYA: 902 Katukojvala Rajulu, Kothagudem.

ABHIGNA: 1459 R. Vatsala, Vaduvuru.

VICHAKSHANA: 1161 R Sivakamu, T. Nagar (Madras).

SAMARTHA: 915 Dadana Chinnayya, (Guntakal.)

सं. भा. प्र. सभा, चित्तूरु.
S. B. P. Sabha, Chittoor.
25—4—1961.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री – Parikshamantry.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# परीक्षाकेन्द्राणि—55

अतिलि, अन्नवरं, अमरापुरं, अनन्तपुरं, अमलापुरं, आलेयपुरं, आह्लगड्डा, एलूरु, कडपा, कन्दुकूरु, कंभम्, कोतगूडें, कोतपेटा, कोयंबुत्तूरु, गुण्टूरु, गुन्तकल्, गोबिचेट्टिपालयम्, चित्तूरु, चिदम्बरं, चीराला, भीमवरं, मचिलीपट्टणं, तञ्जावूरु, त्यागरायनगर्, तिरुचि, महादानपुरं, ताम्बरं, तिरुपति, तिरुवलिकेणि, धर्मवरं, नागपट्टणं, नेल्लूरु, पिळ्ळैयारपट्टी, पेदपाडु, मण्डया, मदुरै, मद्दिकेर, मन्त्रालयं, मन्नारगुडी, मोगिलिगिड्ड, राजोलु, वड्डूरु, वरंगल्, विजयवाडा, शाहपूर्, सत्यमंगलम्, शेलम्, सिरिपुरम्, हस्सनाबाद्, हिन्दुपुरं, कमलापुरम्।

| | परिक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः प्र. श्रे. | | द्वि. श्रे. | | तृ. श्रे. | अनुपस्थिताः | अनुत्तीर्णाः |
|---|---|---|---|---|---|---|---|---|---|---|
| 1. | परिचयः | 555 | 494 | 174 | — | 133 | — | 139 | 61 | 48 |
| 2. | अभिज्ञः | 213 | 191 | 33 | — | 66 | — | 71 | 22 | 21 |
| 3. | विचक्षणः | 42 | 40 | 2 | — | 14 | — | 13 | 2 | 11 |
| 4. | समर्थः | 7 | 7 | 1 | — | 2 | — | 4 | — | — |
| 5. | कोविदः | 1 | 1 | — | | — | | 1 | — | — |
| | आहत्य — | 818 — | 733 | 210 | — | 215 | — | 228 | 85 — | 80 |

की. श्रीनिवासाचार्यः
परीक्षामन्त्री.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskrita Bhasha Pracharini Sabha, Chittoor.

## प्लव दाक्षिणायन परीक्षा फलितांशाः

## Results Of September Examinations 1961.

The following are the Register Numbers of the successful candidates who appeared for the Sanskrit Examinations held on 9th and 10th September 1961 by the Samskritha Bhasha Pracharini Sabha, Chittoor.

### परिचयः PARICHAYA

प्रथमश्रेणी I Class: 33 43 45 50 56
62 63 80 113 123 142 143 149 150
159 175 191 192 193 243 271 336 348
351 352 353 354 355 360 364 391 393
396 397 398 415 523 524 525 546 547
548 549 552 560 562 563 564 565 587
601 606 607 616 626 and 635.

द्वितीयश्रेणी II Class: 17 18 20 31 32
42 44 47 52 54 55 60 61 64
74 77 84 98 115 148 155 174 176
178 181 184 185 187 189 190 206 216
217 221 222 224 227 232 234 235 237
245 246 247 254 262 264 266 312 314
315 334 335 339 343 344 349 356 357
358 361 362 363 367 368 369 370 371

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



375 395 400 403 407 421 423 424 425
427 455 456 496 497 498 501 502 520
521 522 526 529 543 545 558 567 569
586 589 591 593 596 598 599 604 605
612 614 617 618 619 625 627 628 636
and 638.

तृतीयश्रेणी III Class: 13 19 21 23 24
40 41 49 53 65 75 79 87 88
97 107 108 109 122 144 146 147 156
177 179 180 188 218 219 220 223 226
228 231 233 239 242 248 249 252 255
256 257 258 259 260 313 337 338 340
341 342 350 359 366 372 399 401 402
404 405 406 422 426 428 430 432 433
444 453 495 499 500 503 534 537 538
541 542 544 566 568 570 590 594 595
600 603 608 611 613 630 and 637.

## अभिज्ञः ABIGNA

प्रथमश्रेणी I Class: 82 100 137 276 289
323 325 327 416 458 463 469 481 489
and 507.

द्वितीयश्रेणी II Class: 10 14 15 16 35
36 57 66 81 90 92 93 94 95
99 101 110 118 130 132 134 135 136
161 162 163 194 195 207 211 213 215
275 278 281 284 287 288 290 291 318
319 320 321 822 324 326 328 330 331

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



345 346 379 381 383 434 435 460 465
467 468 472 475 476 477 478 482 483
484 486 487 508 512 571 574 575 576
622 and 629.

तृतीयश्रेणी III Class: 4 5 8 9
37 38 39 89 91 102 116 117 119
120 125 127 128 131 138 164 166 196
197 198 209 210 212 214 267 268 269
274 279 282 283 316 317 329 347 365
380 384 447 457 459 461 462 464 466
470 471 473 474 479 480 488 505 511
572 621 631 and 633.

## विचक्षणः VICHAKSHANA

प्र. श्रे. I Class: 490 Only.

द्वि. श्रे. II Class: 27 169 170 171
200 203 301 332 387 440 451 491
493 and 518.

तृ. श्रे. III Class: 6 104 105 106
111 112 199 201 202 293 294 295
299 300 303 304 305 306 307 308
310 311 386 389 390 413 417 418
441 452 492 494 516 517 519 577
and 578.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## समर्थः SAMARTHA

प्र. श्रे. I Class: Nil.

द्वि. श्रे. II Class: 12 419 420 and 624.

तृ. श्रे. III Class: 83 Only.

## कोविदः KOVIDA

प्र. श्रे. I Class: Nil.

द्वि. श्रे. II Class: 70 172 and 173

तृ. श्रे. III Class: 67 68 69 71 72 and 73.

The following are the candidates who stood first in first class of above examinations.

Prizes will be awarded to them in due course.

PARICHA: 354 V. Anandavalli, Tinnevelli.
ABHIGHNA: 289 K. Vaidehi, Tanjore.
VICHAKSHANA: 490 M. Raghavan, Madurai.

सं. भा. प्र. सभा, चित्तूरु.
S. B. P. Sabha. Chittoor.
27—10—1961.

की. श्रीनिवासाचार्यः,
परिक्षामन्त्री — Parikshamantri.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# परीक्षाकेन्द्राणि—43

अनन्तपुरं, अमलापुरम्, आत्रेयपुरम्, आल्लगड्डा, एलूरु, कडपा, कमलापुरम्, कुरुकुन्द, कोडैक्कानल्, कोत्तपेट, कोयमुत्तूरु, गद्वाल्, गुडदहल्ली, गुंटूरु, गुंतकल्, गोबिचेट्टिपालयम्, चित्तूरुः चिदम्बरम्, तंजाऊरु, तांबरम्, तिरुपति, तिरुनेल्वेलि, तिरुवण्णामलै, तिरुवल्लिक्कोणि, नागपट्टणम्, नेल्लूरु, पिल्लैयार्पट्टी, पेंटपाड्ड, मद्दिकेरा, मछलीपट्टणम्, मंत्रालयं, मधिरा, मदुरै, मन्नार्गुडि, मंडय, मांबलम्, राजमंड्री, वसिष्ठाश्रम्, शेलम्, हैदराबाद्, तिरुची, वरंगल्, श्रीरंगम् ।

| | परिक्षाः | अभ्यर्थिनः | उपस्तिथताः | उत्तीर्णाः प्र. श्रे. | उत्तीर्णाः द्वि. श्रे. | उत्तीर्णाः तृ. श्रे. | अनुपस्थिताः | अनुत्तीर्णाः |
|---|---|---|---|---|---|---|---|---|
| 1. | परिचयः | 346 | 303 | 56 | 114 | 93 | 43 | 40 |
| 2. | अभिज्ञः | 196 | 176 | 15 | 79 | 62 | 20 | 20 |
| 3. | विचक्षणः | 75 | 64 | 1 | 14 | 37 | 11 | 12 |
| 4. | समर्थः | 9 | 6 | — | 4 | 1 | 3 | 1 |
| 5. | कोविदः | 12 | 12 | — | 3 | 6 | — | 3 |
| | आहत्य | 638 | 561 | 72 | 214 | 199 | 77 | 76 |

कि. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतभाषाप्रचारिणी सभा, चित्तूर.

# Samskrita Bhasha Pracharini Sabha, Chittoor.



## प्लव उत्तरायण परीक्षा फलितांशाः

## RESULTS OF MARCH EXAMINATIONS 1962.

The following are the Register Numbers of the successful candidates who appeared for the Sanskrit Examinations held on 10th and 11th March 1962 by Samskrita the Bhasha Pracharini Sabha, Chittoor.

### परिचयः PARICHAYA

प्रथमश्रेणी I Class: 5 18 30 56 58
82 to 84 86 to 88 110 113 114 154 159
163 164 195 243 to 245 247 255 257 258
260 to 264 267 273 275 277 289 291 295
298 300 to 302 319 332 to 334 336 338 340
345 351 360 363 460 518 523 524 576
580 582 584 to 589 592 595 599 612 613
615 621 633 770 671 678 710 724 to 726
732 742 743 758 784 787 790 791 799
800 801 804 806 808 809 823 838 to 843

द्वितीयश्रेणी II Class: 1 to 4 6 14 19
27 43 57 59 61 67 70 72 78
79 80 81 85 104 109 112 115 116
141 143 148 153 156 157 160 161 165

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



166 167 169 185 190 196 207 209 225 to 228 240 246 248 to 250 252 259 265 266 268 269 271 272 290 292 293 296 297 299 317 322 331 335 339 341 342 346 353 358 442 445 446 459 478 to 480 486 489 490 504 508 517 519 522 526 528 531 540 574 575 578 579 583 591 596 to 598 600 611 614 616 617 619 620 642 644 652 655 665 666 672 675 679 to - 681 696 to 700 706 to 709 741 744 746 751 760 761 763 764 769 770 774 776 777 781 782 786 792 795 798 802 813 815 816 818 to 821.

तृतीयश्रेणी III Class: 16 17 21 25 28 37 41 42 44 45 51 60 62 64 65 68 69 71 103 105 to 108 111 142 144 145 147 149 150 155 158 170 171 182 184 186 189 191 to 194 208 224 230 239 251 274 276 294 320 337 347 350 352 354 359 361 362 364 443 458 467 469 472 473 476 483 to 485 495 496 499 502 503 505 to 507 509 to 512 514 516 520 521 525 529 532 533 537 538 541 543 545 547 548 581 590 593 594 618 634 640 641 643 645 653 654 957 658 664 669 673 674 676 701 to 705 715 716 734 737 to 740 747 to 750 752 759 762 765 to 768 775 778 793 794 797 814 826,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शोभकृद्वत्सरीयाः

## दक्षिणायनपरीक्षाः

एतद्वत्सरीया दक्षिणायनपरीक्षाः 1963 सेप्टंबर 7, 8, 9 तिथिषु प्रचलिष्यन्ति । तदर्थं सशुल्कमावेदनपत्राणि जुलै 20 तिथेः पूर्वं प्रेषणीयानि । विलम्बशुल्केन साकं जुलैमासान्तपर्यन्तं तानि स्वीक्रियेरन् ।

| | | | |
|---|---|---|---|
| १. | परिचयपरीक्षाशुल्कम् | रु० | १—५० |
| २. | अभिज्ञपरीक्षाशुल्कम् | ,, | ३—०० |
| ३. | विचक्षणपरीक्षाशुल्कम् | ,, | ४—०० |
| ४. | समर्थपरीक्षाशुल्कम् | ,, | ६—०० |
| ५. | कोविदपरीक्षाशुल्कम् | ,, | १०—०० |
| | समर्थपरीक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | कोविदपरीक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | विलम्बशुल्कम् | ,, | ०—५० |
| | विशेषानुमतिशुल्कम् | ,, | १—०० |
| | केन्द्रपरिवर्तनशुल्कम् | ,, | ०—५० |

आवेदनपत्रादिकं विना मूल्यं सभायां लभ्येत ।

परिचयाभिज्ञविचक्षणपरीक्षापाठ्यपुस्तकानि सर्वाणि, अन्यानि च कतिचन सभया विक्रीयन्ते ।

पत्रव्यवहारसंकेतः
**प्रधानमन्त्री,**
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# प्रार्थना

## अयि भोस्सहृदयप्रवराः !

आनयत गैर्वाणीम्
अनुमोदध्वमस्मत्सेवाम्
आपिवत सारस्वतरसम्
अलङ्कुरुत भवद्रचनाभिरेनाम्
अभिवर्धयत सभायाः कार्यक्षेत्रम्
अनुभावयत बालान् शुभोदर्कम्
अनुशीलयताऽस्मत्संस्कृतिं महतीम्
अवत भारतभारतीं इमां गैर्वाणीम्

**गैर्वाण्याः पुरस्कारः**

| | | | |
|---|---|---|---|
| महाराजपोषकः | रु. | 116 | प्रदाता |
| राजपोषकः | ,, | 60 | ,, |
| पोषकः | ,, | 30 | ,, |
| अभिमानी | ,, | 10 | ,, |
| सदस्यः | ,, | 1-50 | ,, |

प्रार्थयिता
ति० कं० तिरुवेङ्कटाचार्यः



**जे० मुनिरत्नम् (कावेरिराजपुरम्)**

अयं जनुषान्धः संस्कृतपठनात्यन्तासक्तः पितृभ्यां निवारितोपि स्वाभीष्टमशिथिलयन् केनचन उपाध्येन श्रावितपाठः धृतविषयश्च चित्तूरुकेन्द्रमेव आगत्य सभाप्रदत्तस्य लेखकस्य साहाय्येन परिचयपरीक्षायां सम्यक् समाहितवान् ।

अस्त्वेतादृशानां दीर्घायुष्यं धीवैभवं च !

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# आण्डाळ् (गोदादेवी)

## विद्वान् टि० के० शौरिराजः

दक्षिणभारते 'श्रीविल्लिपुत्तूर' इति नाम्ना ख्यातो प्रकृतिशोभारम्यो ग्रामो-वर्तते । तत्र विष्णुचित्तो नाम द्विजोत्तमः अवसत् । सः तत्रत्यदेवायतनस्थं भगवन्तं नारायणं पुष्पमालाप्रदानकैङ्कर्यपरः पूजयन्नास्त । एकदा सः कुसुमानि अवचेतुं उद्यानं गतवान् । तत्र च बालतुलसीवृक्षमूले प्रभयोज्वलन्तं स्त्रीशिशुमपश्यत् । तं च गृहमानीय पालयमास ।

सा नाम्ना गोदा बभूव । आण्डाळ् इति च अपरं नाम । शुक्लपक्षचन्द्रवत् वर्धमाना सा विवाहयोग्यवयस्का बभूव । सा च विष्णुचित्तसुता विष्णुचित्ता (विष्णुगतचित्ता) अभवत् । "भगवतः महाविष्णोः पाणिं विना अन्यस्य पाणिं न गृह्णीयामि"ति निश्चित्य सदा पुरुषो-त्तममेव हृहि स्मरन्त्यासीत् । अपि च भगवते समर्पयितुं स्वपित्रा विष्णुचित्तेन ग्रथितया पुष्पमालया आत्मानं मण्डयित्वा स्वसौन्दर्यं दर्पणे पश्यन्ती "अहं पुरुषो-त्तमपत्नी भवितुं योग्या उत न" इति चिन्तयन्ती स्वोच्छिष्टमालां पुनरपि पुष्प-पेटिकायामेव न्यक्षिपन्त्यासीत । तद्वृत्त-मजानन् विष्णुचित्तः तामेव मालां भगवन्मुखोल्लासार्थं दत्तवान् ।

एकदा यदा आण्डाळ्देवी कुसुमस्रजा आत्मानमलङ्कृत्य दर्पणस्य पुरतः अतिष्ठत् तदा तस्याः पिता तामद्राक्षीत् । भृशं खिन्नः सः स्वपुत्र्या मलिनीकृतां मालां दूरे प्रक्षिप्य अन्यां पुष्पमालां भगवदा-यतनं प्रापितवान् । तस्यां निशायां वासुदेवः विष्णुचित्तस्य स्वप्ने आविर्-भूत अकथयच्च — "भक्ताग्रेसर ! भवतस्सुतायाः गोदायाः स्पर्शसंवर्धित-परिमला माला एव मे रोचते" इति ।

सुप्तोत्थितश्च विष्णुचित्तः स्वसुतां प्रति भगवता दर्शितं प्रेमाधिक्यं ज्ञात्वा भृशं तुतोष । तदारभ्य न केवलं गोदा-भूषितमाला परन्तु गोदादेवी च वन-मालिनः वक्षस्थलविहारिणी बभूव ।

"तमिळ्" भाषायां आण्डाळ्देव्या कृतविष्णुस्तुतिपरे "तिरुप्पावै", "नाच्चियार् तिरुमोलि" इति द्वे प्रबन्धे अद्यापि भक्तानां, सहृदयानां च हृदया-ह्लादकरे विलसतः ॥

॥ भक्तिक्रीतो जनार्दनः ॥





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सभायां लभ्यानि पुस्तकानि



| | |
|---|---|
| संस्कृतभाषाबोधिनी प्रथमा | ०—५० |
| ,, द्वितीया | ०—७५ |
| ,, तृतीया | १—०० |
| ,, चतुर्थी | १—५० |
| रामकथा | ०—२५ |
| शब्दमञ्जरी | ०—७० |
| कथावलिः | ०—६० |
| कुमारसम्भवे तृतीयः सर्गः (सविवरणः) | ०—६० |
| गद्यसंग्रहः ,, | ०—८० |
| नागनन्दम् | १—०० |
| शिशुपालवधे १, २ सर्गौ (सविवरणम्) | २—०० |
| किरातार्जुनीये तृतीयसर्गः ,, | ०—४० |
| नीतिचन्द्रिका (नीतिश्लोकाः) | ०—३० |
| बालनिबन्धमाला | ०—७५ |
| समासकुसुमावलिः | ०—२५ |
| धातुरूपावलिः | ०—६० |
| सन्धिविवेकः | ०—५० |
| भर्तृहरिनीतिशतकम् | ०—३५ |
| प्रबन्धपारिजातः | १—६२ |
| व्यासमञ्जरी | १—५० |
| अभिज्ञकुञ्चिका (तृतीयवाचकस्य) आंध्री | ०—७५ |
| परिचयकुञ्चिका (आंध्री) | ०—७५ |

★

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



| | |
|---|---|
| कथाकुसुममञ्जरी I | ०-५० |
| „ II | ०-५० |
| „ III | ०-७५ |
| „ IV | ०-७५ |
| विक्रमार्कचरित्रम् | ०-८७ |
| रघुवंशे द्वादशः सर्गः (सविवरणः) | ०-५० |
| रघुवंशम् सर्गः I मूलमात्रम् | ०-३७ |
| „ „ II „ | ०-३७ |
| „ „ III „ | ०-३७ |
| „ „ IV „ | ०-५० |
| संस्कृतप्रतिलिपिः (Copy Book) I | ०-२० |
| „ „ II | ०-२० |

सङ्केतः—

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शोभकृद्वत्सरारम्भदिने



सभाभवनम्, चित्तूर.

( अपूर्णनिर्माणं दातृणां हस्तावलम्बमपेक्षते )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




त्रैमासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा,

चित्तूरु (आ० प्र०)

क्रमाङ्कः २ ] 30 MARCH 1963 [ वार्षिकम् १—५०



शोभकृच्चैत्राङ्कः ] शकवर्षः १८८५ [ मूल्यम् ४० पैसाः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषयसूची



---

सर्वे पत्रव्यवहाराः—

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)
इत्यनेनैव कार्याः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सम्पादकवर्गः

प्रधानसम्पादकः — श्री यं. वरदराजं पंतुलु,
प्रकाशकमन्त्री ।

## सहायाः

१. श्री ति. कं. तिरुवेङ्कटाचार्यः, प्रधानमन्त्री ।

२. श्री के. श्रीनिवासाचार्यः, परीक्षामन्त्री ।

३. श्री ने. सुब्बरायशास्त्री, प्रचारकमन्त्री ।

४. श्री के. मुनिरेड्डी, कार्यवर्गसभ्यः ।

५. श्री ए. सुब्रह्मण्यशास्त्री, कार्यदर्शी त्रिशिरःपुरीशाखायाः ।

६. श्री टि. महादेवशास्त्री, कार्यदर्शी नागपट्टिणशाखायाः ।

७. श्री जि. रामानुजाचार्यः, कार्यदर्शी मचिलीपट्टणशाखायाः ।

८. श्री ए. राजगोपालन्, कार्यदर्शी मदुरशाखायाः ।

९. श्री च. रंगाचार्यः, कार्यदर्शी हैदराबादशाखायाः ।

१०. श्री जि. यस्. श्यामाचार्यः, कार्यदर्शी कोयंबत्तूरशाखायाः ।

Published by Sri N. Ramanatha Iyer, B. A., B. L.,
Advocate & Secretary, S. B. P. Sabha, Chittoor (A.P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# महतां शुभसन्देशाः



## Sri K. S. Ramaswamy Sastrigal,
## Madras.

I am happy to learn that the Samskrita Bhasha Pracharini Sabha, Chittoor which has done meritorious sustained work in the cause of Sanskrit education is beginning a new and unique venture. The sanskrit Journal which is proposed to be started by is well advance further the cause of the diffusion of sanskrti. Poems, Plays, Stories, Essays and modern knowledge is a simple sanskrit style will do much good. Sanskrit should have been accepted as our national language (Lingua Indica) by then constitution.



## Dr. C. P. Ramasmamy Ayyar,
## Madras.

I am glad to learn that the Samskrita Bhasha Pracharini Sabha, Chittoor. is proposing to publish a journal entitled "GAIRVANI". I wish the venture all success.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

## Justice Ramakrishnan,
Madras.

From the time I was serving in the Chittoor District, I have been watching the work of the Samskrita Bhasha Pracharini Sabha with a great deal of interest, and I have been greatly impressed by the yeoman service it has been doing in the cause of spreading Sanskrit education. I am therefore very glad to know of your new enterprise in publishing the proposed journal 'GIRVANI'. My best wishes for the success of the Journal.



## Sri B. Gopala Reddi,
*New Delhi.*

I am happy to learn that the Sanskrita Bhasha Pracharini Sabha is bringing out a Sanskrit Journal named 'GAIRVANI' which will contain mostly articles in Sanskrit. The need for a classical language to support Indian languages cannot be over-emphasised. I wish your Journal every success and popularity.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्री विमलानन्दः,

श्रीव्यासाश्रमाधिपः, येपेड्डु.

नूतनवर्षारंभे प्रेम्णा प्रेषिता 'गैर्वाणी' पत्रिका यथाकालमधिगता। महानन्दस्समजनि। संस्कृतभाषाप्रचाराय बद्धपारिकराणां तत्रभवतामेष यत्नस्सर्वथा संस्तुत्यः। पत्रिका प्रकाशनं नामातीव क्लेशसाध्यं व्ययबहुलं च कर्म। तथापि संस्कृतभाषासंवर्धनायारब्धोऽयं भवदीयः प्रयत्नः द्योतयति भावत्कं संस्कृतानुरागम्।

न केवलं पत्रिकाप्रकाशनेन, अपित्वल्पीयसीभिः परीक्षाभिस्संस्कृतानुरागं बालबालिकयोः वृद्धेषु च उद्बोधयन्तीति महदिदं प्रमोदस्थानम्। गीर्वाणभाषासंवर्धनात्मको भवदीयस्त्यागपूर्वकोऽयं प्रयासः अवश्यं सफलो भवेदिति मे द्रढीयान् विश्वासः।

भगवत्कृपयाऽचिरादेवेयं पत्रिका रसिकानां विदुषां छात्राणां चादरपात्रं भविष्यतीति शम्।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्री क्षेत्रेशचन्द्र - चट्टोपाध्यायः,

वाराणसी.

दिष्ट्या संस्कृतभाषायाः
प्रचाराख्या तु या सभा ।
चित्तूरनगरे रम्ये
सत्कार्यकरणे रता ॥ ॥ १ ॥

गैर्वाणी - संज्ञया युक्तां
पत्रिकां नूतनामिमाम् ।
प्रकाशयति सुस्पष्टं
श्रुत्वाहं हर्षनिर्भरः ॥ ॥ २ ॥

स्यान्नीतिः पत्रिकायास्तु
शुद्धवाण्याः प्रकाशनम् ।
सर्वेषु संस्कृतार्थं च
सद्भावनां प्रवर्तनम् ॥ ॥ ३ ॥

निवसन् काशिकापुर्यां
क्षेत्रेशश्चन्द्रसंज्ञकः ।
सेवायां देवभाषाया
निरतः प्रार्थयाम्यहम् ॥ ॥ ४ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

वाणीं भजत गैर्वाणीम् !



# गैर्वाण्याः प्रशस्तिः

विद्वान् यस्॰ सुब्रह्मण्यदीक्षितः (पुंगनूरु)

श्रीविष्णुभव्याननकञ्जजाते श्रीवेदवेदान्तवचःप्रसूते ।
गैर्वाणि ! वीणासमुपेतपाणि सर्वार्थदे त्वां प्रणमामि वाणीम् ॥

भाषाजगत्यत्र भवन्ति नैकास्तोषाय नस्युस्तव ताश्च पाकाः ।
एकैव देवि ! त्वमनन्यमूर्त्या लोकान् पुनास्येव विशुद्धकीर्त्या ॥

जानन्ति नैवेश्वरि ! तेऽनुभावं न्यूनेतरं येऽघपरीतभावाः ।
आरोपयन्त्यम्ब मृतं विमूढा दूरे हि ते स्युस्सुगतेश्च बाढम् ॥

नन्दन्तु निन्दन्तु परेऽपरां त्वां वन्दामहे देवि ! लसन्महत्वाम् ।
श्रीभारतस्याऽद्य समैक्यदात्रीं शोभां प्रसन्ना हि ददासि मातः ॥

श्रीमेधासमुपेतसन्नुतमतिर्नेह्रूः प्रधानोत्तमः
राधाकृष्णमहोदयश्च विदितो राष्ट्राधिपत्यं गतः ।
नेतारो भरतावनेश्च नितरामन्येपि मान्योत्तमाः
गैर्वाणीं जननीं भजन्तु सततं वाणीं परां देवताम् ॥

जयतु जयतु भाषा सर्वतो विश्वभूषा
जयतु जयतु धर्मश्शर्मदायी श्रुतीड्यः ।
जयतु जयतु वर्षं भारतं श्रीप्रकर्षं
जयतु जयतु राज्यं प्राज्यमस्मत्स्वराज्यम् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# स्वभावृत्तम्

ईशकृपया शुभकृद्वत्सरो व्यतीतः। संस्कृतपरिपोषणप्रयासाश्च विविधा आधीयन्ते। तत्प्रणाल्या गते डिसम्बरमासे गैर्वाणी प्रथमा पत्रिका प्रकाशिता च।

अधुना च तस्याः द्वितीया पत्रिका भवतां करसरोजयोः समर्प्यते सादरम्। पत्रिका प्रारंभसमये या भीतिरासीदस्माकं – एतस्याः परिपोषणं दुर्लभं, तथा चेत्सभायाः इयं भारो भविष्यतीति सा इदानीं व्यपगता। आशाज्योतिश्च सन्दृश्यते यतः प्रथमपत्रस्य प्रकाशनसमनन्तरमेव, बहवस्सहृदयाः सदस्यतामङ्गीकृत्यास्मदुत्साहं व्यवर्धयन्। आशास्यते च अचिरेणैव कालेन सहस्रं सभ्या भवेयुः तत्समनन्तरमेवेयं मासिकी भूत्वा स्वप्रचारमनन्यादृशमाविष्करिष्यतीति।

सभायाः कुम्भमासीयाः परीक्षाः आन्ध्रेषु द्रविडेषु कर्णाटेषु बहुत्र निर्विघ्नतया समचलन्। पञ्चस्वपि परीक्षासु षट्छती विद्यार्थिनां समाविशत्। सप्तचत्वारिंशत् केन्द्राणि समवर्तन्त। विद्यार्थिषु केरळभाषालेखिनः आङ्गलेखिनः हिन्दीलेखिनश्च केचनाभवन्। क्रैस्तवाः महम्मदीया अपि कतिचनाऽवर्तन्तेति महत्संतोषस्थानम्।

अपि चेयं अन्या सन्तोषवार्ता यत् भारतसर्वकारः सभायै रु. २८२० रूप्यकाणि प्रादात् यैस्सह सभया रु.१८८० मेलयित्वा रु.४७०० संस्कृतप्रचाराय ग्रन्थालयाय पारितोषिकादिभ्यश्च व्ययितव्यम् इति निर्दिष्टम्। सभा च सङ्कटे महति पतिता वर्तते (न च खलु परिभोक्तुं नैव शक्नोमि हातुम्) देयपूरणाय। अपि तु दातृवर्गस्य मुखमवलोक्यते च हस्तावलम्बाय।

अयमन्यो वृत्तान्तः सहृदयानां पुरतः निधीयते यद्भवनं सभायाः ४५ सहस्रैः निर्मेयं आन्ध्रसर्वकारदत्तेन ५ साहस्र्या प्रारब्धनिर्माणं, १५ सहस्रैः अन्यतः समार्जितैः पुरतः द्विभूमिकोपेतं केवलं उदस्थाप्यत। तत्रापि अग्रतः अधः सुधालेपादिविहीनं पश्चाद्भागे च अस्पृष्टपुनर्निर्माणं अपूर्णं एव वर्तते। तत् अस्याः गैर्वाण्याः पृष्ठभागे स्पष्टतया

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दृश्यते । सभया आन्ध्रसर्वकाराय एतद्विषये पुनः प्रदानाय कृता विज्ञप्तिः अत्यवसरपरिस्थितिकारणादिति विफलिता ।

तथापि सभा न स्वीयं धैर्यमपाकरोत् यतस्सा जानाति बहवस्सज्जनाः स्वोद्धरणाय बद्धकङ्कणाः प्रतिक्षणमनुपालयन्तीति ।

मछलीपट्टणशाखया कोविदकलाशालाभवननिर्माणयत्न आधीयते । तदनुषङ्गे पुरपालकसमित्या तदनुकूलं स्थलं २५ रूप्यवार्षिकदेयेन प्रतिसृष्टमिति प्रमोदस्थानम् । परन्तु इयं सभा तत्सदस्यान् निर्निबन्धोपकाराय मुहुः प्रार्थयते ।

त्रिशिरःपुरीयशाखा नागपट्टणशाखा च कालिदासजयन्तीं रथसप्तमीसमारोहं वाल्मीकिजयन्तीं च निरवर्तयताम् ।

अधुना च द्रविडेषु संस्कृतभाषाया महाननर्थ आपतितो वर्तते । उन्नतपाठशालासु संस्कृतस्य अङ्कानां अगणनविधानेन विद्यार्थिनः संस्कृते अनुत्सुका संपद्यन्ते । ततः नागपट्टणीया शाखा रथसप्तमीदिने स्वसमावेशे संस्कृताङ्कगणनादेशाय काञ्चन विज्ञप्तिं मद्राससर्वकाराय प्रैषयत् । प्रार्थयते इयं सभा द्रविडराष्ट्रीयान् जनान् संस्कृतपुनःप्रतिष्ठायै सर्वकारं विज्ञापयितुं तदनुकूलप्रयत्नं च कर्तुं ।

इयमन्या शुभावार्ता कर्णाकर्णिकी भारतसर्वकारस्य अयोमार्गशाखया संस्कृतयोग्यता अनुबन्धयोग्यतात्वेन स्वीकृतेति ।

"न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति"

तिः कं॰ तिरुवेङ्कटाचार्यः,
प्रधानमन्त्री.



## भूतपूर्वराष्ट्रपतेः राजेन्द्रप्रसादस्य अस्तमयः

निष्कलङ्कं बहुकालं राष्ट्रं पालितवतः संस्कृतभाषासमुन्नतिमादधतः राजेन्द्रप्रसादस्य अस्तमयात् सभेयं अशरण्या दुःखविवशा किंकर्तव्यतामूढा च समजनि ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# देवर्षिः नारदः

**नारायणमूर्तिः** (न्यायवेदान्तशिरोमणिः)

– अस्याः सृष्टेः पूर्वसृष्टौ नारदः गन्धर्वो बभूव। एकवारं ब्रह्मलोके भगवन्नामसंकीर्तनं भवति स्म। सर्वे देवाः गन्धर्वाश्च तत्र संकीर्तनाय आयाता आसन्। नारदः स्वभार्याभिः साकं तत्सभां आजगाम। तत्रापि स विनोदं कर्तुमारेभे। तत् दृष्ट्वा वेधाः तं शशाप— 'त्वं त्वदपेक्षया महतां पुरतोऽपि शिष्टतां संयमं च परित्यज्य शूद्रवत् हससि। अतः त्वं शूद्रो भूत्वा लोके जायस्व' इति।

विधेः शापान्नारदः कस्मिंश्चित् शूद्रगेहे समुत्पन्नः। तदुत्पत्तिसमनन्तरमेव तत्पिता ममार। तन्माता एकस्मिन् ब्राह्मणगृहे कर्म कृत्वा स्वस्याः सुतस्य च पोषणं करोति स्म। नारदः बाल्येऽपि महान् नम्रः सुशीलश्चासीत्। स तस्य ब्राह्मणस्याज्ञां पालयति स्म।

एकवारं ब्राह्मणगेहं केचन सज्जना आगताः। ते वर्षकाले मासचतुष्टयं तत्रैव न्यवसन्। नारदः तदा पञ्चवर्षवयस्क एव वव्रते। किन्तु स क्रीडादिकं विहाय तेषां साधूनां समीप एवोपविशति स्म। साधवः परस्परं यां भगवद्गुणचर्चां कुर्वन्ति स्म, तां शृणोति स्म।

साधुसेवया भगवद्गुणश्रवणेन च नारदस्य हृदयं पवित्रमभूत्। ईदृशीं बालस्य नम्रतां, भगवद्गुणश्रवणानुरक्तिं, विलक्षणसेवाभावं च वीक्ष्य साधवः सन्तुष्टान्तरङ्गा बभूवुः। ते तत्स्थानाद्गमनसमये नारदाय भगवन्नामजपस्य ध्यानस्य चोपदेशं चक्रुः।

नारदस्य मनस्तु एकान्ते भगवद्भजनयुतं एवासीत्। परन्तु स स्वमातरं त्यक्त्वा क्वापि गन्तुं न पारयति स्म। कस्मिंश्चिद्दिने नक्तं तन्माता ब्राह्मणस्य गां दोग्धुं गता। तदा तां सर्पोऽदशत्। सा मृतिं गता। नारदस्तु तेन दुःखी न जातः। स तु चिन्तयामास— 'भगवान् मयि कृपया भजनावकाशं प्रदत्तवान्' इति। तदनु सः तद्गृहात् एकाकी एव चचाल।

तदा नारदः पञ्चवर्षवयस्क एवासीत्। अतः पत्तनानि वा ग्रामान् वा पल्लीर्वा न जानाति स्म। स तु साक्षादुत्तरां दिशं प्रति याति स्म।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अन्ते स एकं महद् घोरारण्यमागतवान्। क्षुत्पिपासार्दितः सः कञ्चन सरोवरं प्राप। तत्र सरसि जलं पीत्वा कस्यचित् अश्वत्थवृक्षस्याध उपविश्य ध्यानं कर्तुमारेभे। हठात् तस्य हृदये भगवानाविर्बभूव। किन्तु भगवद्दर्शनमिदं क्षणकालमेव बभूव। तत्पश्चात् भगवानन्तर्दधे। तेन नारदोऽतीव खिन्नो जातः। स वारं वारं ध्यानाय प्रयत्नं कर्तुमारेभे।

तदैव आकाशवाणी जाता— 'हे नारद! यत्ते मद्दर्शनं जातं तन्मद्दयायैव जातम्। त्वन्मनः मय्येव लग्नं भवतु इति अहं ते एकक्षणमेव दर्शनमदाम्। यस्य चित्तं शुद्धं नास्ति, तस्य तु मद्दर्शनं न भवितुमर्हति। अस्मिन् जन्मनि तन्नसाध्यं त्वया। परन्तु आगामिनि जन्मनि त्वं मां प्राप्नुयाः' इति।

नारदः तत्रैव भूमौ शिरः निक्षिप्य भगवन्तं प्रणनाम। ततः स भगवन्नामकीर्तयन् भूभ्रमणं कर्तुमारेभे। कालक्रमेण तस्य शरीरं नष्टम्। अस्याः सृष्टेः प्रारम्भे सः ब्रह्ममानसपुत्ररूपेणोत्पन्नः।

सम्प्रति अस्यां सृष्टौ नारदः भगवतः प्रधानभक्तेष्वन्यतमः। सः भक्तिमार्गाचार्यः। ध्रुवस्य प्रह्लादस्य च स एव गुरुः (मन्त्रोपदेष्टा)। तस्योपरि भगवतः कृपा अन्यादृशी वर्वर्ति। सः स्वयं कथयति— 'यदा भगवद्गुणगानं कर्तुमारभे तदैव भगवान् मम हृदये आहूतवत् प्रत्यक्ष भवति' इति॥

# सुवर्णनियन्त्रणम्

(अज्ञातः)

मणिगणानां स्वर्णरौप्यादीनां च आकरे भारते भीकरैरुपद्रवैः इतः पूर्वमेव रत्नलोपस्समुद्भूतः। परदेशीयैः लुण्ठितानि सोमनाथालयवर्तीनीव बहुप्रभास्फूर्तीनि कोहिनूरादीनि लोकदुर्लभानि रत्नानि। सुवर्णं च प्रत्यक्षतया परोक्षतया च निस्सारितं महापरिमाणेन। नाणकानि च क्रमशः रैप्यात निक्कलपर्यन्तमवारोहन्। महानाणकानि च काकलपत्रात्मकान्यासन्।

एवं सर्वथा निस्सारीकृते भारते एकैवाश्वासस्थानमासीत यत स्त्रियः देवाश्च महार्घाभरणधारिणः देशभाग्य-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतिबिम्बा व्यराजन्त । न कापि दुर्गता सुवर्णमयेन मांगल्येन विना वर्तते इति महत्प्रमोदावहमासीत् अस्माकम् ।

अधुना तु चैनीयोपद्रवप्रभवात् आतङ्कात् सुवर्णमपि दुर्वर्णेन सह अदृश्यं भविष्यतीय प्रतिभाति । शुद्ध-सुवर्णस्य निरोधो वञ्चकानां कञ्चुकता-मापेदे । क्रये मिश्र सुवर्णं महार्घेणैव लभ्यते जनैः, विक्रये च शुद्धं अल्पीयसा मूल्येन नीयते तेभ्यः ।

एवं सुवर्णनियन्त्रणनीतिः प्रजासु कष्टशतानि समुत्पदयति । न ज्ञायते कदा वा ईशकृपया मणीनां महारजतस्य च स्वेच्छया सुलभप्राप्तिः पूर्ववद्भवेत् जनानां धैर्यं च विवर्धेत इति ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# कर्षकप्रबोधः

(ति० कं० तिरुवेङ्कटाचार्यः)

अवत देशं परिचरत राष्ट्रं निजं
कृषिकर्मनिर्मलाः कर्षकप्रवराः ! ॥ अवत ॥

चैना विलुण्ठकाश्चलितनिजधर्मकाः
प्रसरन्ति देशस्य शिरसि वलविद्विषः ।
आहारवस्त्रादिचारूढमूल्यकं
न्यूनीभवेत् प्रजाजीवना धारकं ॥ ॥ अवत ॥

तण्डुला गोधुमाः कोद्रवादीन्यतो
माषचरणकादिकं तैलकार्यासकं ।
भवदीयकृषिमूलकं, कर्षकाः !
भवदधीनोत्पत्तिकं ॥ ॥ अवत ॥

आहारसम्पदा विपुलयत देशं
पशुसमृद्ध्या बहु भावयत देशं ।
स्वायत्तभारतमपाक्षिप्तचीनकं
पोषयत तोषयत त्वत्कृषिमहिम्ना ॥ ॥ अवत ॥

सीरमवनेः कृषिविशेषकरणे धरत
शरमपि च नासीरविहरणे वहत ।
प्रबलयत निजबलं विदलयत रिपुकुलं
परिचरत भारतं देशमधिकम् ॥ ॥ अवत ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सुभाषितानि

(श्री एन्० रामनाथ अय्यरः)

क्षणमात्रं ग्रहावेशः याममात्रं सुरामदः ।
लक्ष्मीमदस्तु मूर्खाणामादेहमनुवर्तते ॥ १६

The infatuation to a person possessed by evil spirits lasts for a few seconds; for a Yama (3 hours) for one inebriated by wine; but in the case of the wicked, the arrogance due to riches lasts throughout their life.

उद्यंतु शतमादित्या उद्यंतु शतमिन्दवः ।
न विना विदुषां वाक्यैः नश्यत्याभ्यंतरं तमः ॥ १७

The primordial ignorance (inward darkness) cannot be dispelled even by hundreds of rising suns or moons, except through the instructions of realised souls.

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासः मृत्युरेव न संशयः ॥ १८

An unruly wife, a wicked friend, an impertinent servant, and living in a house haunted by a serpent are tantamount to death.

असन्तुष्टो द्विजो नष्टः सन्तुष्टश्च नराधिपः ।
सलज्जा गणिका नष्टा निर्लज्जा च कुलांगना ॥ १९

A Dwija (twice born) without contentment, a sovereign with contentment, a harlot with modesty and a family woman without modesty, are lost.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पयःपानं भुजंगानां केवलं विषवर्धनम् ।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥ २०

The feeding of serpents on milk, only increases their poison; well meant advice tendered to fools provokes them, instead of reforming them.

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पंडितम् ॥ २१

The unwise is assailed by thousands of sorrows and hundreds of fears every day, but not the wise man.

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ २२

A person, if he should prosper, has to give up the six faults namely, sleepiness, laziness, fear, anger, procrastination and unreadiness.

यदभावि न तद्भावि भाविचेन्न तदन्यथा ।
इति चिन्ताविषघ्नोयं अगदः किं न पीयते ॥ २३

What is not fated to happen will not happen; if it is fated to happen, it will not be otherwise (ie it will happen). Why not this antidote against depression swallowed by every one.

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधः तथा लोभः तस्मादेतत्त्रयं त्यजेत् ॥ २४

There are three doors to hell which conduct a man to destruction, lust, anger and greed. Therefore one should avoid them.

[3]

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

नास्ति बुद्धिरयुक्तस्य नचायुक्तस्य भावना ।
नचाभावयतश्शान्तिः अशान्तस्य कुतस्सुखम् ॥ २५

A mind without control cannot comprehend; nor can it meditate; without meditation how can there be peace and without peace how can there be happiness.

हरिं हरीतकीं चैव गायत्रीं च दिने दिने ।
मोक्षारोग्यतपःकामः चिन्तयेत् भक्षयेत् जपेत् ॥ २६

A person desirous of liberation, health, and spiritual advancement, should contemplate on Hari, use Haritaki (chebulic myrobelan) and do Japa on Gayatri, every day.

मधुलुब्धो यथा भृंगः पुष्पात्पुष्पांतरं व्रजेत् ।
ज्ञानलुब्धस्तथा योगी गुरोर्गुर्वन्तरं व्रजेत ॥ २७

Just as the honey bee hops from one flower to another keen on collecting honey, similarly the knowledge-mad Yogi (a striver after truth) should wander from one Guru to another (to obtain knowledge).

गुणवज्जनसंसर्गात् याति नीचोपि गौरवम् ।
पुष्पमालानुषंगेण सूत्रं शिरसि धार्यते ॥ २८

Due to association with the virtuous, even a low person, attains eminence; The thread in the flower garland is worn on the head due to its association with flowers.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

यस्स्वभावो हि यस्यास्ते स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ॥ २९

It is difficult to get over ones nature; even if a dog is made a king does it give up eating filth ?

जीर्यन्ति जीर्यतः केशाः दन्ता जीर्यन्ति जीर्यतः ।
जीवनाशा धनाशा च जीर्यतोपि न जीर्यति ॥ ३०

As a man becomes old, his hairs become grey and teeth fall down; but the desire to live and clinging to wealth do not leave him.

परान्नं च परद्रव्यं परशय्या परस्त्रियः ।
परवेश्मनि वासं च दूरतः परिवर्जयेत् ॥ ३१

One should avoid living on others food. others wealth, others couch and association with others women and establishing himself in others houses.

(सशेषाणि)



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ग्रन्थस्वीकृतिः

## ६. अमरवाणी

मूल्यम् ७५ पैसाः

प्राप्तिस्थानम्—

**समुद्राल लक्ष्मय्यः,**
संस्कृतपण्डितः, संस्कृतोन्नतपाठशाला
कोत्तपालेम्, नेल्लूरु मण्डलम् ।

इदं खण्डकाव्यम् । युवकेन विद्वत्कविना लक्ष्मय्यनाम्ना आन्ध्रभाषायां पद्यरूपेण ग्रथितमतीवाह्लादयति । संस्कृतवाण्याः प्राचीनमौन्नत्यं आधुनिकी दुरवस्था अनया च समुत्पन्नाः राजकीयादिसङ्कटाः, तन्निवारणोपायाः संस्कृतपुनरुद्धरणरीतयश्च ललितसुकुमारया शैल्या अत्र प्रतिपादिताः ॥

## ७. श्रीसूक्तम्

मूल्यम् ५० पैसाः

प्राप्तिस्थानम्—

**श्रीविशिष्टाद्वैतप्रचारकसङ्घः,**
नडिगड्डुपालेम् P.O.
गुण्टूरु मण्डलम् ।

इदं आन्ध्रलिप्या मुद्रितं । श्रीसूक्तस्य ऋचः सस्वराः सभाष्याः निबद्धाः । अपि च ऋचां अन्वयः प्रतिपदार्थः व्याख्यानं च आन्ध्रभाषायां विशदतया श्रीमता गोपालाचार्येण निबद्धा विद्यते । आस्तिकानामत्यन्तोपादेयोऽयं ग्रन्थः ॥

## ८. सुबोधिनी

वार्षिकं छन्दः रू ६.

प्राप्तिस्थानम्—

सामर्लकोट (पश्चिमगोदावरी मण्डलम्)

एषा आन्ध्रभाषामयी, अपितु प्राचीनसंस्कृतिसंरक्षणबद्धदीक्षा प्राचीनवाङ्मयप्रचुरा अवश्यपठनीया मासिकी पत्रिका । एतत्पठनेन विमतानां कुशङ्कानां निराकरणं सुकरं भवेत् ॥

## ९. श्रीकृष्णावतारप्रशंसा

प्राप्तिस्थानम्— मूल्यम् ५० पैसाः

**श्रीगोपालाचार्यः,**
रंगमन्दिरम्, राजमहेन्द्रवरम् – ३

अत्र 'तमद्भुत'मित्यदि श्लोकान्यवलम्ब्य बहवः अर्थविशेषाः सप्रमाणं सरलसंस्कृते निरूपिताः । प्राचीनैः प्रतिपाद्यमानानां विशेषांशानां सङ्कलनेन अद्भुततामापादितोयं ग्रन्थः क्रौ. १/८ परिमाणे ३२ पृष्ठेषु विस्तृतः उपन्यासकानां मनोविकासयति ॥ 

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# मितव्ययः

## भारद्वाजः

द्रव्यसम्पादनं मनुजस्यावश्यकं स्वजीविकानिर्वर्तनाय। विना धनं असाध्यं जीवनं मनुजस्य तत्कुटुम्बस्य च। तस्मात् यां कांचन योग्यां वृत्तिमवलम्ब्य धनार्जनं कर्तव्यमेव।

अपि तु धनसम्पादनस्य कृते नीचा अयोग्या च वृत्तिर्नावलम्ब्या। नीचवृत्त्या जीवनात् अनाहारेण मरणमपि वरम्।

आर्जितस्य धनस्य विनियोगे विवेकः अत्यावश्यकः। अन्यथा महाधनवानपि सर्वदा दुःखितः एव भवेत्। विवेकहीनतया अनावश्यके विषये धनराशिः व्ययिता भवेत्। ततः आवश्यके विषये तल्लोपः पुरुषं व्यथयेत्। अस्माभिर्बहवो नित्यं दृश्यन्ते जनाः विनोदेभ्यो वेषेभ्यः व्ययितसर्वधनाः ऋणमाकाङ्क्षमाणाः तदृणप्रतियातनायान्यत् ऋणं आददतश्च नित्यशोकाः नित्यपीडिताः। ते एवं पीड्यमाना अपि छायाचित्रदर्शनं न परित्यजन्ति द्वित्रदिनेषु, न परिहरन्ति भक्ष्यालयपरामर्शं, नोत्सृजन्ति क्रीडाविनोदालयपरिसेवनम्। एतादृशाश्च सर्वदा दुर्गता दुःखिता औदुम्बरवद्बहिरेव मनोहराः अन्तः सन्तापिताः कालं गमयन्ति।

अन्यानपि कांश्चन जनान् पश्यामः येल्पधनादायवन्तोपि तृप्ताः सुखिनः सगौरवं कालं गमयन्ति। तत्र किं कारणं? एते आत्मसम्पदनुरूपतया आवश्यकानावश्यकानंशान् विविच्य आवश्यकेभ्य एव कार्येभ्यः अत्यन्तावश्यकमेव धनं विनियुञ्जते, अनावश्यककार्याणि तिरस्कुर्वन्ति च। व्यर्थाडम्बरसंभ्रमादीनामात्मानं न वशयन्ति। अतस्ते क्लेशविहीनास्सुखं यापयन्ति स्वजीवितम्।

अत्रायमप्यंशः सावधानतया परिशीलनीयः। बहवो वर्तन्ते लेके मनुजाः स्वसम्पादितं धनं स्वयं अभुक्त्वा परस्मै चाप्रदाय निकृष्टजीवनं यापयन्तः लोभिनः। ईदृशो लोभगुणो नितरां निन्द्यः। मितव्ययस्य आवश्यके कार्ये यावदावश्यकं धनव्ययः एवार्थः, न तु तत्रापि व्ययाभावः। तथा चेत् धनार्जनस्य किं प्रयोजनम्? आत्मानुभवेन वितरणेन च शून्यं सम्पादनं रक्षणादिषु दुःखकरमेव सम्पद्येत न सुखकरम्।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


यदवोचत् कश्चित् —

**कृपणेन समो दाता न भूतो न भविष्यति ।**
**अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ।।**

इति तत्सत्यमेव ।

एवं च मितव्ययपदस्य न लोभोपि अर्थः । अतः हितं मितं च धनं कार्येषु विनियुञ्जानः स्वयं मोदते परानपि मोदयते ।।

# वार्ताः

भारतनौकावलस्य पुनर्निर्माणे योग्यसूचनप्रदानार्थं मौंटबाटन अस्मद्देशमागच्छति । स जलान्तर्गामिनां निर्माणव्यवस्थामपि कल्पयिष्यतीति आशास्यते । तन्निर्माणाभ्यन्तरे ब्रिटनात् आवश्यकानि नव्यानुकूल्यानि च तानि प्रेषयिष्यन्ते इति अभ्यूह्यते ।।

* * *

रष्याविदेशांगमन्त्री रस्कः, ब्रिटिष सामान्यभाग्यविभागमन्त्री शांडीसश्च भारतदेशमागच्छतः । अनुमीयते एतौ चैनायाः नूतनप्रवर्तनदृष्ट्या समुद्भूताः परिस्थितीः समालोचयिष्यतः इति ।।

* * *

बोकारोप्रदेशीयस्य अयःपथकस्य निर्माणे अमेरिकया क्रियमाणेन आलस्येन नितरां खिद्यति भारतसर्वकारः । रांचीकर्मागारे यन्त्रनिर्माणं द्रुतमाचरितुं तद्द्वारा बोकारोपथकस्य निर्वहणसामर्थ्यमाचेतुं च यतते ।।

* * *

शान्तियात्रिणां चीनदेशगामिनां मार्गं निराकरोत् पाकिस्थानम् । ब्रह्मदेशोपि तेभ्यो मार्गं न दास्यतीति अभ्यूह्यते । इदानीं तेषां यात्रा कथं निर्वाह्येतेति न ज्ञायते ।।

* * *

लोकसभायां निर्बन्धनिक्षेपशासनमामोदितम् । एतेन पञ्चाधिकरूप्यकक्षेत्रकरदाता, सार्धसहस्रवार्षिकः वैतनिकः, नगरेषु गृहादिमान्, पञ्चदश-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सहस्राधिकवाणिज्यवान् च अवश्यं निक्षिपेत् नियतं धनम् ॥

*　　*　　*

अधुना दक्षिणभारते शर्करायाः दुर्लभता अतीव जनान् खेदयति । अतः सहकारापणेषु विभज्यदीयमानायाः अर्ध-किलोपरिमाणाया एव तस्याः प्राप्त्यै जनाः श्रेणीबद्धाः तिष्ठन्ति खिद्यन्ति च ॥

*　　*　　*

नदीजलोपयोगविवादः आन्ध्रमैसूर-महाराष्ट्राणां रूपाद्रूपान्तरमाददन् सदा प्रत्यक्षीभवति । केन्द्रसर्वकारेण क्रिय-माणाः तात्कालिकानुनयाः न समग्रं फलमदर्शयन् ॥

*　　*　　*

महति जलसौकर्ये वर्तमानेऽपि ५७ लक्षैकैकरपरिमितं क्षेत्रं अकृष्टमपच्यमेव वर्तते इति भारतव्यवसायविभागामात्यः रामसुभागसिंहः लोकसभायां सभ्यारोपण-मनुमेने ॥

*　　*　　*

इतः परं भारते अमेरिकासन्धि-विग्राहिकत्वपदे चेस्टरबौलः नियोक्ष्यते । आशास्यते स काश्मीरसमस्या परिष्कारे महदुपकरिष्यतीति ॥

*　　*　　*

उत्तमर्णसमावेशो वाशिंगटननगरे जार्जि वुड्स् अध्यक्षेण समपद्यत । भारतदेशप्रतिनिधिः यन्० के० झामहो-दयः उपस्थीय भारताय १२० कोटि डालराणां ऋणं तृतीयपंचवर्षपथकनिर्वा-हाय आकांक्षत ॥

*　　*　　*

२८–४–६३ दिने बहुल श्रीशंक-राचार्यजयन्तीमहोत्सवः, श्रीरामानुज जयन्तीमहोत्सवश्च निरवाह्यत ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सभाभवनस्य पश्चाद्भागः



शिथिलच्छदिकः

समावेशरङ्गत्वेन स्नानभोजनपाचनगृहत्वेन विपरिणेयः धनसाहाय्यमवेक्षते उदाराणाम् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskritha Bhasha Pracharini Sabha Chittoor.

## शुभकृदुत्तरायणपरीक्षाणां फलितांशाः

## RESULTS OF MARCH EXAMINATIONS 1963.

The following are the Registered Numbers of the successful candidates who appeared for the Sanskrit Examinations held on 1st 2nd 3rd and 4th March 1963 by the Samskritha Bhasha Prasharini Sabha, Chittoor.

### परिचयः PARICHAYA

**Frist Class:** 547 548 551 573 574
585 588 591 594 609 611 617 618
637 649 650 651 653 655 659 665
671 672 673 705 707 708 709 710
711 712 713 714 715 716 717 719
720 724 725 729 750 752 755 758
760 770 771 772 788 791 792 793
799 800 801 802 803 806 807 830
832 833 835 836 838 840 841 842
843 844 845 846 847 849 850 852
857 858 859 860 862 863 873 874
896 897 907 908 928 929 930 931
944 951 960 961 962 963 1004 1007
1010 1011 1016 1020 1023 1057 1061 1064
1066 1069 1079 1080 1081 1082 1085 1087
1088 1092 1105 1107 1111 1112 1113 1114
1115 1118 1126 1127 and 1131.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



Second Class: 546 549 550 557 558
559 560 562 563 570 583 584 587
593 602 605 610 612 614 615 616
619 634 645 546 647 648 657 658
662 667 674 706 718 728 730 751
753 754 756 768 769 773 783 804
805 814 815 819 821 823 826 827
828 829 834 837 854 855 856 861
875 876 877 909 926 933 934 939
940 942 945 946 947 948 949 950
957 958 963 973 974 976 977 978
985 989 990 991 1005 1006 1008 1009
1012 1013 1014 1015 1017 2018 1019 1021
1025 1026 1027 1030 1031 1056 1059 1063
1065 1067 1071 1086 1089 1090 1094 1106
1108 1109 1116 1117 1119 1123 1124 1132
1138 1139 1140 and 1145.

Third Class: 553 564 565 566 569
571 572 581 582 586 589 590 592
600 601 603 604 606 608 620 635
638 652 661 664 676 677 721 726
727 759 789 790 820 824 831 851
878 937 938 941 964 965 969 971
975 982 986 995 996 1024 1028 1058
1060 1062 1091 1128 1129 1130 1133 1136
and 1137.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अभिज्ञः ABHIGNA

First Class: 599 629 656 732 735
736 748 749 766 775 776 779 781
782 786 787 817 865 868 869 870
883 884 885 and 1033.

Second Class: 579 595 596 597 598
623 624 679 681 683 733 734 761
762 763 764 767 777 780 794 796
798 816 864 866 867 880 903 904
905 910 922 925 952 655 956 1000
1042 1045 1050 1051 1052 1054 1075 1076
1078 1083 1120 and 1134.

Third Class: 554 575 626 627 680
682 765 774 778 795 797 818 871
881 886 902 906 911 921 943 953
954 1001 1002 1003 1034 1036 1037 1038
1040 1041 1044 1046 1047 1049 1053 1074
1121 and 1144.

## विचक्षणः VICHAKSHANA

First Class: Nil.

Second Class: 690 744 808 809 810
811 812 889 and 900

Third Class: 578 632 633 386 687
691 813 887 and 899.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## समर्थः SAMARTHA

First Class: 893 and 999.

Second Class: 746 890 891 892 894 and 998.

Third Class: 1098 1099 1100 1101 1102 and 1104.

Passed in Part only: 556 644 and 1103.
Passed in Part II only: 696 699 872 and 916.

## कोविदः KOVIDA

First Class: Nil.

Second Class: 1084 only.

Third Class: 580 only.
Passed in Part I only: 700 701 702 and 703.
Passed in Parts I and III: 704 only.
Passed in Part V only: 630 and 901.

The following are the names of the candidates who stood first in first class of the above examinations. Prizes will be awarded to them in due course.

PARICHAYA: No. 671 — P. Maithili, Tanjore.

ABHIGNA: No. 782 — P. S. Seetha, Tirunagar.

SAMARTHA: No. 999 — S. Shukavanam, Salem.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

## उत्तीर्णाः 482

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|---|
| | | | प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खण्डशः |
| 1. परिचयः | 379 | 347 | 130 | 129 | 62 | — |
| 2. अभिज्ञः | 147 | 137 | 25 | 49 | 39 | — |
| 3. विचक्षणः | 35 | 34 | — | 9 | 9 | |
| 4. समर्थः | 29 | 26 | 2 | 6 | 6 | 7 |
| 5. कोविदः | 10 | 10 | — | 1 | 1 | 7 |
| | 600 | 554 | 157 | 194 | 117 | 14 |



### एतत्परीक्षाविनियुक्तानि केन्द्राणि 47

अनन्तपुरम्, आल्लगड्ड, एलूरु, कडप, कपिलेश्वरपुरम्, कीरनूर्, कूचिपूडि, कोव्वूर्, कोंडबालवारिपालेम्, कोयंबत्तूरु, गुंटूरु, गान्धिग्राम्, गोबिचेट्टिपालेम्, चिदम्बरम्, चित्तूरु, चीराल, तंजावूर्, ताम्बरम्, त्यागराजनगरम्, तिरुवल्लिक्कोणी, तिरुनगर्, तिरुप्पापुलियूरु, तिरुचिरापल्ली, नागपट्टिणम्, नेल्लूरु, पट्टुकोट्टै, बेंगलूरु, बोब्बिलि, मंत्रालयः, मदुरै (A), मदुरै (B), मन्नार्गुडि, मद्दिकेर, महादानपुरम्, मचिलीपट्टणम्, रावि अनन्तवरम्, राजमंड्रि, विल्लिवाकम्, विजयवाड, वेगेश्वरपुरम्, वेलिवेन्नु, वूलपल्ली, श्रीरङ्गम्, शाहपूर्, सेलम्, हिन्दुपूरु, हैदराबाद्.



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शोभकृद्वत्सरीयाः

## दक्षिणायनपरीक्षाः

एतद्वत्सरीया दक्षिणायनपरीक्षाः 1963 सेप्टंबर 7, 8, 9 तिथिषु प्रचलिष्यन्ति । तदर्थं सशुल्कमावेदनपत्राणि जुलै 20 तिथेः पूर्वं प्रेषणीयानि । विलम्बशुल्केन साकं जुलैमासान्तपर्यन्तं तानि स्वीक्रियेरन् ।

| | | | |
|---|---|---|---|
| १. | परिचयपरीक्षाशुल्कम् | रू० | १—५० |
| २. | अभिज्ञपरीक्षाशुल्कम् | ,, | ३—०० |
| ३. | विचक्षणपरीक्षाशुल्कम् | ,, | ४—०० |
| ४. | समर्थपरीक्षाशुल्कम् | ,, | ६—०० |
| ५. | कोविदपरीक्षाशुल्कम् | ,, | १०—०० |
| | समर्थपरीक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | कोविदपरीक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३—०० |
| | विलम्बशुल्कम् | ,, | ०—५० |
| | विशेषानुमतिशुल्कम् | ,, | १—०० |
| | केन्द्रपरिवर्तनशुल्कम् | ,, | ०—५० |

आवेदनपत्रादिकं विना मूल्यं सभायां लभ्येत ।

परिचयाभिज्ञविचक्षणपरीक्षापाठ्यपुस्तकानि सर्वाणि, अन्यानि च कतिच न सभया विक्रीयन्ते ।

पत्रव्यवहारसंकेतः
**प्रधानमन्त्री,**
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# प्रार्थना

## अयि भोस्सहृदयप्रवराः !

आनयत गैर्वाणीम्
अनुमोदध्वमस्मत्सेवाम्
आपिवत सारस्वतरसम्
अलङ्कुरुत भवद्रचनाभिरेनाम्
अभिवर्धयत सभायाः कार्यक्षेत्रम्
अनुभावयत बालान् शुभोदर्कम्
अनुशीलयताऽस्मत्संस्कृतिं महतीम्
अवत भारतभारतीं इमां गैर्वाणीम्

**गैर्वाण्याः पुरस्कारः**

| | | |
|---|---|---|
| महाराजपोषकः | रु. 116 | प्रदाता |
| राजपोषकः | ,, 60 | ,, |
| पोषकः | ,, 30 | ,, |
| अभिमानी | ,, 10 | ,, |
| सदस्यः | ,, 1-50 | ,, |

प्रार्थयिता
तिं० कं० तिरुवेङ्कटाचार्यः



**जे० मुनिरत्नम् (काबेरिराजपुरम्)**

अयं जनुषान्धः संस्कृतपठनात्यन्तासक्तः पितृभ्यां निवारितोपि स्वाभीष्टमशिथिलयन् केनचन उपाध्येन श्रावितपाठः धृतविषयश्च चित्तूरुकेन्द्रमेव आगत्य सभाप्रदत्तस्य लेखकस्य साहाय्येन परिचयपरीक्षायां सम्यक् समाहितवान् ।
अस्त्वेतादृशानां दीर्घायुष्यं धीवैभवं च !

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# आण्डाल् (गोदादेवी)

## विद्वान् टि० के० शौरिराजः

दक्षिणभारते 'श्रीविल्लिपुत्तूर' इति नाम्ना ख्यातो प्रकृतिशोभारम्यो ग्रामो-वर्तते । तत्र विष्णुचित्तो नाम द्विजोत्तमः अवसत् । सः तत्रत्यदेवायतनस्थं भगवन्तं नारायणं पुष्पमालाप्रदानकैङ्कर्यपरः पूजयन्नास्त । एकदा सः कुसुमानि अवचेतुं उद्यानं गतवान् । तत्र च बालतुलसीवृक्षमूले प्रभयोज्वलन्तं स्त्रीशिशुमपश्यत् । तं च गृहमानीय पालयमास ।

सा नाम्ना गोदा बभूव । आण्डाल् इति च अपरं नाम । शुक्लपक्षचन्द्रवत् वर्धमाना सा विवाहयोग्यवयस्का बभूव । सा च विष्णुचित्तसुता विष्णुचित्ता (विष्णुगतचित्ता) अभवत् । "भगवतः महाविष्णोः पाणिं विना अन्यस्य पाणिं न गृह्णीयामि"ति निश्चित्य सदा पुरुषोत्तममेव हृहि स्मरन्त्यासीत् । अपि च भगवते समर्पयितुं स्वपित्रा विष्णुचित्तेन ग्रथितया पुष्पमालया आत्मानं मण्डयित्वा स्वसौन्दर्यं दर्पणे पश्यन्ती "अहं पुरुषोत्तमपत्नी भवितुं योग्या उत न" इति चिन्तयन्ती स्वोच्छिष्टमालां पुनरपि पुष्पपेटिकायामेव न्यक्षिपन्त्यासीत् । तद्वृत्त-मजानन् विष्णुचित्तः तामेव मालां भगवन्मुखोल्लासार्थं दत्तवान् ।

एकदा यदा आण्डाल्देवी कुसुमस्रजा आत्मानमलङ्कृत्य दर्पणस्य पुरतः अतिष्ठत् तदा तस्याः पिता तामद्राक्षीत् । भृशं खिन्नः सः स्वपुत्र्या मलिनीकृतां मालां दूरे प्रक्षिप्य अन्यां पुष्पमालां भगवदायतनं प्रापितवान् । तस्यां निशायां वासुदेवः विष्णुचित्तस्य स्वप्ने आविर्भूत अकथयच्च — "भक्ताग्रेसर ! भवतस्सुतायाः गोदायाः स्पर्शसंवर्धितपरिमला माला एव मे रोचते" इति ।

सुप्तोत्थितश्च विष्णुचित्तः स्वसुतां प्रति भगवता दर्शितं प्रेमाधिक्यं ज्ञात्वा भृशं तुतोष । तदारभ्य न केवलं गोदाभूषितमाला परन्तु गोदादेवी च वनमालिनः वक्षस्थलविहारिणी बभूव ।

"तमिल्" भाषायां आण्डाल्देव्या कृतविष्णुस्तुतिपरे " तिरुप्पावै ", "नाचियार् तिरुमोलि" इति द्वे प्रबन्धे अद्यापि भक्तानां, सहृदयानां च हृदयाह्लादकरे विलसतः ॥

॥ भक्तिक्रीतो जनार्दनः ॥





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सभायां लभ्यानि पुस्तकानि



पुस्तकालय 077925 गुरुकुल कांगड़ी विश्वविद्यालय हरिद्वार

| | |
|---|---|
| संस्कृतभाषाबोधिनी प्रथमा | ०—५० |
| ,, द्वितीया | ०—७५ |
| ,, तृतीया | १—०० |
| ,, चतुर्थी | १—५० |
| रामकथा | ०—२५ |
| शब्दमञ्जरी | ०—७० |
| कथावलिः | ०—६० |
| कुमारसम्भवे तृतीयः सर्गः (सविवरणः) | ०—६० |
| गद्यसंग्रहः ,, | ०—८० |
| नागनन्दम् | १—०० |
| शिशुपालवधे १, २ सर्गौ (सविवरणम्) | २—०० |
| किरातार्जुनीये तृतीयसर्गः ,, | ०—४० |
| नीतिचन्द्रिका (नीतिश्लोकाः) | ०—३० |
| बालनिबन्धमाला | ०—७५ |
| समासकुसुमावलिः | ०—२५ |
| धातुरूपावलिः | ०—६० |
| सन्धिविवेकः | ०—५० |
| भर्तृहरिनीतिशतकम् | ०—३५ |
| प्रबन्धपारिजातः | १—६२ |
| व्यासमञ्जरी | १—५० |
| अभिज्ञकुञ्चिका (तृतीयवाचकस्य) आंध्री | ०—७५ |
| परिचयकुञ्चिका (आंध्री) | ०—७५ |

★

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


| | |
|---|---|
| कथाकुसुममञ्जरी I | ०-५० |
| ,, II | ०-५० |
| ,, III | ०-७५ |
| ,, IV | ०-७५ |
| विक्रमार्कचरित्रम् | ०-८७ |
| रघुवंशे द्वादशः सर्गः (सविवरणः) | ०-५० |
| रघुवंशम् सर्गः I मूलमात्रम् | ०-३७ |
| ,, ,, II ,, | ०-३७ |
| ,, ,, III ,, | ०-३७ |
| ,, ,, IV ,, | ०-५० |
| संस्कृतप्रतिलिपिः (Copy Book) I | ०-२० |
| ,, ,, II | ०-२० |

सङ्केतः—

**प्रधानमन्त्री,**
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शोभकृद्वत्सरारम्भदिने



सभाभवनम् , चित्तूरु.

( अपूर्णनिर्माणं दातॄणां हस्तावलम्बमपेक्षते )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

